# ANUPANADARPANA.

WITH

HINDI TRANSLATION

BY

PT. GYARASARAM SHARMA

PRINTED AND PUBLISHED

BY

GANGAVISHNU SHRIKRISHNADASS,

PROPRIETOR " LAXMI-VENKATESHWAR " PRESS

KALYAN-BOMBAY.

1898

श्रीः ।

# अनुपानदर्पणम् ।

श्रीमद्दाधीचवंशभूषणश्रीबलदेवसूनुना ज्ञारसरा-
मशर्म्मणा कोविदेन विरचितं सुश्रुतादिवि-
विधायुर्वेदीयग्रन्थप्रमाणैः समन्वितं
सुभाषानुवादेन च विभूषितम् ।


यह ग्रन्थ

गङ्गाविष्णु श्रीकृष्णदासने

लोकहितार्थ

स्वकीय " लक्ष्मीवेङ्कटेश्वर " छापेखानेमें

मुद्रित कर प्रसिद्ध किया.

संवत् १९५५, शके १८२०.

कल्याण-मुंबई.

# भूमिका.

सदा प्रज्ञाहर्षे श्रुतिसद्वबोधप्रजनिते
हृदा सन्तुष्टेनाऽखिलसुखयुतो यो हि रमते ।
असावाह्वस्यार्थो भवति शिवदो यस्य कविना
कृतो ग्रन्थस्तेनाऽयमिति ननु विज्ञेयमनघाः ॥

विदित हो कि, श्रीयुत धन्वन्तरिजी महाराजने लोकोपकारार्थ स्वकीय आयुर्वेदमें ऐसे २ विषय प्रदर्शित किये हैं कि जिनके विचारपूर्वक चिकित्साका प्रचार होनेसे अवश्यही रोगोंका संहार होकर सुखका प्रसार होता है परन्तु आयुर्वेदोक्त विषयोंमेंसे वैद्योंको जैसा अनुपानरूपी विषय श्रेयस्कर है वैसे अन्य नहीं कारण कि, एकही औषधी न्यारे २ अनुपानसे अनेकानेक रोगोंको दूर कर सक्ती है इसलिये अनुपानमयी विषयको समस्त वैद्योंने पूर्णरूपसे जानना चाहिये. अतएव मैंने सुश्रुत, वाग्भट, भावप्रकाश, शार्ङ्गधर, वैद्यजीवन, मदनपालनिघण्टु, गौरिकाञ्चलिका तन्त्र और रसेन्द्रसारसंग्रह आदि विविधायुर्वेदीय ग्रन्थोंके सारमयी श्लोकोंका संग्रह करके यह अनुपानदर्पण नामक ग्रन्थ निर्म्माण किया है जैसे दर्पण ( काच ) से अपना स्वलंकृत स्वरूप स्पष्ट दृष्ट पडता है वैसेही इस ग्रन्थसे अन्नौषध और सुवर्णादि भस्मोंके अनुपान यथार्थरूपसे ज्ञात होंगे. यह ग्रन्थ नव प्रमोद ( विभागों ) में पूर्ण किया गया है तत्तत्प्रमोदका वृत्तांत तत्तत्प्रमोदावलोकनसेही ज्ञात होगा. विशेषतः यदि इस ग्रन्थमें कहीं मेरी बालबुद्धिद्वारा कुछ उचितमें अनुचित हो गया हो तो विद्वान् पुरुष क्षमा कर सुधार लेंगे.

---

भवदीय कृपाभिलाषी देशहितेच्छु—

झारसरामशर्म्मा वैद्य,

कामठी.

॥ श्रीः ॥

# अथ अनुपानदर्पणस्थविषयानुक्रमणिका ।

इत्यनुक्रमणिका समाप्ता ।

॥ श्रीः ॥

अथ भाषाटीकासहितं

# अनुपानदर्पणम् ।

**प्रणम्य श्रीगणेश्वरं हरिं हरं दिवाकरं शिवां गुरुं च लक्ष्मणाग्रजाह्वयं भिषग्वरम् ॥ गुणाकरं सुधाकरं गतस्पृहं दयाधरं करोम्यहं सतां मुदेऽनुपानदर्पणं परम् ॥ १ ॥**

प्रारब्धग्रंथस्य निर्विघ्नेन परिसमाप्त्यर्थं सपञ्चामरगुरुनमस्कारात्मकं मङ्गलमातनोति पञ्चचामरवृत्तेन । ग्रन्थकर्ता कविः अहं ( ज्ञारसरामः ) ज्ञा अवबोधने-क्र्या० प० जानातीति ज्ञा बुद्धिः रस आस्वादने चुराद्यदन्तश्चास्माद्धातोः अकर्तरि च कारके संज्ञायाम् ३-३-१९ सूत्रेणानेन घञ् । रस्यते इति रसः स्वादो हर्षो वा । रसो गंधरसे स्वादे इति विश्वः । रसः स्वादे जले वीर्ये इति हैमः । रसो जलं रसो हर्ष इत्यनेकार्थध्वनिः । रमु क्रीडायामस्माद्धातोः ज्वलातिकसन्तेभ्यो णः ३-१-१४० सूत्रेणानेन णः । रमते इति रामः ज्ञा बुद्धिस्तस्या रसोऽवबोधात्मकः स्वादो हर्षो वा तास्मिन् रमते इति ज्ञारसरामः । अनुपानदर्पणं ( अनुपानग्रंथानां मध्ये दर्पणमादर्शसमं ) परं ( उत्तमं ग्रंथं ) करोमि । किं कृत्वा । श्रीगणेश्वरं ( श्रिया शोभया युक्तानां गणानां प्रमथानामीश्वरस्तं गणाधिपम् ) हरिं ( विष्णुं ) हरिर्विष्णुर्हरिर्मरुदित्यनेकार्थध्वनिः । हरं (महादेवं) हरः स्मरहरो भर्ग इत्यमरः । दिवाकरं (सूर्य्यं) सूरसूर्य्यार्य्यमादित्यद्वादशात्मदिवाकरा इत्यमरः । शिवां ( दुर्गां ) च पुनः गुरुं ( गृणाति हितमुपदिशतीति गुरुस्तमायुर्वेदोपदेष्टारमित्यर्थः ) प्रणम्य ( नमस्कृत्य ) कीदृशं गुरुं लक्ष्मणा-

ग्रजाह्वयं ( लक्ष्मणाग्रजो रघुनाथ आह्वयो यस्य सः तं रघुनाथशर्म्माणं स्वामिनमित्यर्थः ) पुनः कीदृशं भिषग्वरं ( वैद्यश्रेष्ठं ) भिषग्वैद्यौ चिकित्सके इत्यमरः। पुनः कीदृशं गुणाकरं (गुणानामाकरस्तं सद्गुणसम्पन्नमित्यर्थः ) पुनः कीदृशं सुधाकरं ( सुधा अमृतं करे यस्य स तं पीयूषपाणिं सिद्धहस्तमित्यर्थः ) पीयूषममृतं सुधा इत्यमरः । पुनः कीदृशं गतस्पृहं ( गता स्पृहा दीनेभ्यो धनप्राप्तिवांछा यस्य स तं संतुष्टमनसमित्यर्थः ) पुनः कीदृशं दयाधरं ( धरतीति धरः दयाया धरो दयाधरस्तं कृपालुं दुःखितेष्वनुकम्पाशीलम् ) कृपा दयाऽनुकम्पा स्यादित्यमरः । कस्मै प्रयोजनाय सतां ( विदुषां साधूनां वा ) सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सादित्यमरः । सत्साधौ धीरशस्तयोरिति मेदिनी । मुदे ( हर्षाय ) मुत् प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदा इत्यमरः।अनेन खलानां हर्षाभावः सूचितः। भवति चात्र–नन्दन्ति भोजनैर्विप्रा मयूरा घनगर्जनैः । साधवः परकल्याणैः खलाः परविपत्तिभिः ॥ परोत्कर्षाऽसहनत्वमेवासाधुधर्म्मत्वमिति भावः ॥ १ ॥

अर्थ–इस ग्रंथकी निर्विघ्नसे समाप्तिके लिये ग्रंथकर्ता कवि पंचचामरछंदसे गणेशादि पञ्च देवतोंसहित अपने गुरुको नमस्काररूप मङ्गल करता है। बुद्धिके विचाररूपी हर्षमें जो रमण करे उसे ज्ञारसराम कहते हैं सो मैं गणेश, विष्णु, महेश, सूर्य्य, देवी और वैद्योंमें श्रेष्ठ, सद्गुणसंपन्न, अमृतके समान जिनका हाथ, लोभरहित, दयासहित जो पंडित श्री १०५ रघुनाथशर्म्मा स्वामीजी दोसोदनिवासी जिन्होंने मुझे आयुर्वेद ( वैद्यविद्या ) पढाया उन गुरुजीको नमन करके सज्जनोंके आनंदार्थ अति उत्तम अनुपानदर्पण नामक ग्रंथको बनाता हूं ॥ १ ॥

---

१ सत्यं शौचं दया क्षांतिस्त्यागः संतोष आर्जवम् ॥ शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम् ॥ ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः ॥ १ ॥ स्वातंत्र्यं कौशलं कांतिर्धैर्य्यमार्दवमेव च ॥ इत्यादयो गुणाः ।

अथातो वैद्यविवेकं व्याख्यास्यामः ।

**शास्त्रं गुरुमुखोद्गीर्णमादायोपास्य चासकृत् ॥**
**यः कर्म्म कुरुते वैद्यः स वैद्योऽन्ये तु तस्कराः ॥ २ ॥**

सुश्रु० सू० स्था० अ० ४ ।

अर्थ-अब वैद्यके विवेक ( विचार ) को वर्णन करेंगे । जो गुरुमुखद्वारा शास्त्रग्रहण करके वारंवार विचारक्रियामें निपुण होकर चिकित्सा ( व्याधिशमनोपाय ) करता है वही वैद्य है और जो गुरुसे संपूर्ण ग्रन्थको विना पढेही वैद्य बन जावें वे वैद्य नहीं किन्तु चोर हैं । ऐसा धन्वंतरिजीने सुश्रुतसे कहा है ॥ २ ॥

**एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयम् ॥**
**तस्माद्बहुश्रुतः शास्त्रं विजानीयाच्चिकित्सकः ॥ ३ ॥**

सुश्रु० सू० स्था० अ० ४ ।

अर्थ-गुरुके मुखद्वाराभी एकही शास्त्र पढनेवाला शास्त्रके सारको नहीं जान सक्ता इसलिये वैद्यको उचित है कि सब शास्त्रोंके विषयको पढ सुन और विचार कर अवश्य जान लेवे ॥ ३ ॥

**अधिगतमप्यध्ययनमप्रभाषितमर्थतः खरस्य चन्दनभार इव केवलं परिश्रमकरं भवति-यथा खरश्चन्दनभारवाही भारस्य वेत्ता न तु चन्दनस्य॥ एवं हि शास्त्राणि बहून्यधीत्य चार्थेषु मूढाः खरवद्वहन्ति ॥ ४ ॥** सुश्रु० सू० स्था० अ० ४ ।

अर्थ-जो पुरुष सब शास्त्रकोभी पढ ले और उसे अर्थ अनर्थका ज्ञान न हो तो वह केवल शास्त्रोंका भार उठानेवाला है उसे शास्त्री सद्वैद्य कहना योग्य नहीं । जैसे गधेपर चंदन लादनेसे वह केवल चंदनके भार ( बोझ ) को जानता है परन्तु उसकी सुगन्धको नहीं

जानता इसलिये वैद्यकशास्त्र पढनेवालेको व्याकरण ( पाणिनीयसूत्रों ) का बोध अवश्य चाहिये जिससे अर्थानर्थको जान लेवे ॥ ४ ॥

**भवन्ति चात्र–यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ॥ स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम् ॥ ५ ॥**

अर्थ–जो केवल वैद्यशास्त्रको जानता हो और कर्म्म ( अनुपानादिक्रिया ) में निपुण न हो वह वैद्य रोगीको प्राप्त होकर मोहित ( घबडाय ) जाता है । जैसे कायर रण ( संग्राम ) पाकर घबरा जाता है तैसे ॥ ५ ॥

**यस्तु कर्म्मसु निष्णातो धाष्टर्याच्छास्त्रबहिष्कृतः ॥**
**स सत्सु पूजां नाप्नोति वधं चार्हति राजतः ॥ ६ ॥**

सुश्रु० सू० स्था० अ० ३ ।

अर्थ–और जो क्रियाको जानता हो परन्तु शास्त्रके बोधसे रहित हो वह वैद्य सज्जनोंमें आदर नहीं पाता और राजाको उचित है कि उस अनपढ वैद्यको अपने राज्यसे बाहर कर दे वा मरवा डाले नहीं तो वह बहुतसी प्रजाको नष्ट कर देगा ॥ ६ ॥

**उभावेतावनिपुणावसमर्थौ स्वकर्म्मणि ॥**
**अर्द्धवेदधरावेतावेकपक्षाविव द्विजौ ॥ ७ ॥**

अर्थ–उक्त दोनों प्रकारके वैद्य अशिक्षित होनेसे चिकित्सा करनेमें असमर्थ होते हैं जैसे एक पंखवाले पक्षी उडनेको असमर्थ होते हैं तैसे एक अथवा जो इन दोनोंमें अर्थात् क्रिया और शास्त्रमें अशिक्षित हैं वे पक्षोंरहित पक्षीके समान दुःखित और असमर्थ होते हैं ॥ ७ ॥

**औषध्योऽमृतकल्पास्तु शस्त्राशानिर्विषोपमाः ॥**
**भवन्त्यज्ञैरुपहृतास्तस्मादेतौ विवर्जयेत् ॥ ८ ॥**

अर्थ–जो औषधि अमृतके समान हैं वे उन अशिक्षित (विन पढे हुए मूर्ख) वैद्योंके हाथसे शस्त्र, वज्र और विषके समान हो जाती हैं इसलिये सबको उचित है कि मूर्ख वैद्योंसे औषध कदापि न लेवें ॥८॥

यस्तूभयज्ञो मतिमान्स समर्थोऽर्थसाधने ॥
आहवे कर्म्म निर्वोढुं द्विचक्रः स्यन्दनो यथा ॥ ९ ॥
सुश्रु० सू० स्था० अ० ३।

अर्थ–जो बुद्धिमान् शास्त्र और क्रियामें निपुण है वही प्रयोजन सिद्ध करता है अर्थात् उसीसे रोग निवृत्त होता है। जैसे युद्धमें दो पहियेके रथसे कार्य्य सिद्ध होता तैसे, इसलिये अष्टांग आयुर्वेदको पढे हुए और क्रियामें निपुण ऐसे वैद्यसेही सबने औषध सेवन करना चाहिये। ये सब सुश्रुतके सूत्रस्थानके तीसरे तथा चौथे अध्यायमें लिखा है ॥ ९ ॥

इति श्रीमत्पंडितज्ञारसरामविरचिते सुभाषानुवादविभूषितेऽनुपानदर्पणे वैद्यविवेककथने प्रथमः प्रमोदः ॥ १ ॥

---

# अथ द्वितीयः प्रमोदः।

अथायुर्वेदविवेकं व्याख्यास्यामः।

इह खल्वायुर्वेदो नाम यदुपाङ्गमथर्ववेदस्यानुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्यायसहस्रं च कृतवान् स्वयंभूस्ततोऽल्पायुष्ट्वमल्पमेधस्त्वं चावलोक्य नराणां भूयोऽष्टधा प्रणीतवान् ॥ १ ॥

अर्थ–अब आयुर्वेदविवेकका वर्णन करेंगे। यह आयुर्वेद जो अथर्ववेदका उपाङ्ग है उसको सृष्टिसे पूर्वही परमात्माने एक लक्ष

श्लोक और एक सहस्र अध्यायमें निर्म्मित किया इतना बनानेके पश्चात् मनुष्योंकी अल्पायु और अल्पबुद्धि देखकर उस आयुर्वेदके पुनः आठ भाग किये ॥ १ ॥

**शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यमगदतन्त्रं रसायनतंत्रं वाजीकरणतंत्रमिति॥२॥**

अर्थ–उन आठ भागोंके ये नाम हैं । १ शल्य, २ शालाक्य, ३ कायचिकित्सा, ४ भूतविद्या, ५ कौमारभृत्य, ६ अगदतंत्र, ७ रसायनतंत्र और ८ वाजीकरणतंत्र ॥ २ ॥

### अथास्य प्रत्यङ्गलक्षणसमासः ।

**१ तत्र शल्यं नाम विविधकाष्ठपाषाणपांशुलोहलोष्टास्थिवालनखपूयास्रावान्तर्गर्भशल्योद्धरणार्थं यंत्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थं च ॥ ३ ॥**

सुश्रु० सू० स्था० अ० १ ।

अर्थ–अब इस आयुर्वेदके प्रत्येक भागका पृथक् पृथक् लक्षण कहते हैं । १ शल्यका लक्षण–अनेक प्रकारके तृण ( कठोर घास वा गोखरू नागफनी आदिके कांटे ), काष्ठ ( लकडीकी फांस आदि ), लोहेकी कील, हड्डी बाल नख आदिके लगनेसे जो घाव हो जाता है अथवा उक्त वस्तुओंका कुछ भाग ( अंश ) घावमें रह जानेसे जो घाव बिगड जाता है उसके दूर करनेको जो शस्त्र वा यन्त्रद्वारा उन वस्तुओंका निकालना या गर्भमें मरे हुए बालकको शस्त्र वा यंत्रद्वारा निकालना अथवा घावके उत्तम प्रकारसे जाननेके हेतु जो यत्न किया जाता है उसको शल्यचिकित्सा कहते हैं ॥ ३ ॥

**२ शालाक्यं नाम ऊर्ध्वजत्रुगतानां रोगाणां श्रवणनयनवदनघ्राणादिसंश्रितानां व्याधीनामुपशमनार्थम् ॥ ४ ॥**

अर्थ- २ शालाक्यलक्षण-जो कण्ठसे ऊपरके अङ्ग जैसे मुख नाक नेत्र ओष्ठ कान आदिमें उत्पन्न हुए रोगोंके दूर करनेको यत्न किया जाता है उसे शालाक्य कहते हैं ॥ ४ ॥

**३ कायचिकित्सा नाम सर्वाङ्गसंश्रितानां व्याधीनां ज्वरातिसाररक्तपित्तशोषोन्मादापस्मारकुष्ठमेहा-दीनामुपशमनार्थम् ॥ ५ ॥** सुश्रु०सू०स्था०अ०१।

अर्थ-३ कायचिकित्सालक्षण-जो संपूर्ण अंग ( शरीर, देह ) में हुए ज्वर, अतिसार, रक्तविकार, पित्तरोगशोष ( खुशकी ), उन्माद ( खपती-पगला ), अपस्मार ( मृगी ), कुष्ठ, प्रमेह ( परमा ) आदि रोगोंके दूर करनेको यत्न किया जाता है उसे कायचिकित्सा कहते हैं ॥ ५ ॥

**४ भूतविद्या नाम देवासुरगन्धर्वयक्षरक्षःपितृपि-शाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्म्मबलिहर-णादिग्रहोपशमनार्थम् ॥ ६ ॥**

सुश्रु० सू० स्था० अ० १।

अर्थ-४ भूतविद्यालक्षण-जो देवता, असुर, गंधर्व, यक्ष, राक्षस, पितर, पिशाच, सर्प और नवग्रह आदिमें चित्त लगनेसे अनेक भ्रम-जन्य पीडा होती है उनकी शान्ति करनेको यत्न किया जाता है उसको भूतविद्या कहते हैं ॥ ६ ॥

**५ कौमारभृत्यं नाम कुमारभरणधात्रीक्षीरदोषसं-शोधनार्थं दुष्टस्तन्यग्रहसमुत्थानां च व्याधीनामु-पशमनार्थम् ॥ ७ ॥**

अर्थ-५ कौमारभृत्यलक्षण-बालकोंका पालन, पोषण, धायके दूधमें जो दोष होते हैं उनके तथा उस बिगडे हुए दूधके पीनेसे

जो बालकोंको रोग होते हैं उनके दूर करनेके यत्नोंको कौमारभृत्य तंत्र कहते हैं ॥ ७ ॥

**६ अगदतंत्रं नाम सर्पकीटलूतावृश्चिकमूषिकादिदष्टविषव्यंजनार्थं विविधविषसंयोगविषोपहतोपशमनार्थम् ॥ ८ ॥**

अर्थ–६ अगदतंत्रलक्षण–सांप, कीडे, बन्दर, मूसे आदि विषैले जीवोंके काटनेसे जो मनुष्योंके शरीरमें विष फैल जाता है उसको दूर करनेको जो उपाय किया जाता है उसे अगदतंत्र कहते हैं ॥८॥

**७ रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थम् ॥ ९ ॥ सुश्रु० सू० स्था० अ० १ ।**

अर्थ–७ रसायनतंत्रलक्षण–जिससे मनुष्योंकी आयु पूर्ण हो और बल बुद्धिकी वृद्धि तथा समस्त रोग निवृत्त हों उस उपायको रसायनतंत्र कहते हैं ॥ ९ ॥

**८ वाजीकरणतन्त्रं नाम अल्पदुष्टविशुष्कक्षीणरेतसामाप्यायनप्रसादोपचयजननानिमित्तं प्रहर्षजननार्थं च एवमयमायुर्वेदोऽष्टाङ्ग उपदिश्यते॥१०॥**

अर्थ–८ वाजीकरणतंत्रलक्षण–जिससे थोडे वीर्यवाले पुरुषकी वीर्य वृद्धि, बिगडे वीर्यवालेकी वीर्यशुद्धि और क्षीणवीर्यवालेकी पुनः वीर्योत्पत्ति और उक्त तीनों प्रकारके मनुष्योंको जो आनंद देनेवाला उपाय हो उसे वाजीकरणतंत्र कहते हैं इस प्रकारसे यह आयुर्वेद अष्टाङ्ग कहलाता है ॥ १० ॥

**इह खल्वायुर्वेदप्रयोजनं व्याध्युपसृष्टानां व्याधिपरिमोक्षः स्वस्थस्य रक्षणं च आयुरस्मिन् विद्यतेऽनेन वा आयुर्विन्दतीत्यायुर्वेदः ॥ ११ ॥**

**सुश्रु० सू० स्था० अ० १ ।**

अर्थ-इस जगत्में आयुर्वेदके प्रकाश करनेका यही प्रयोजन है कि रोगयुक्त मनुष्योंको रोगसे छुडाना और रोगरहित मनुष्योंकी रोगसे रक्षा करना ( बचाना ) । आयुर्वेदका अर्थ यह है कि, आयु अर्थात् शरीर, इन्द्रिय और जीव इन तीनोंका स्वस्थतापूर्वक संयोग हो जिसमें उसे आयुर्वेद कहते हैं अथवा २ आयुका जिससे विचार हो उसे आयुर्वेद कहते हैं। अथवा ३ आयु जिसके द्वारा जानी जाय उसे आयुर्वेद कहते हैं। अथवा ४ जिससे आयु प्राप्त हो उसे आयुर्वेद कहते हैं। यह सब सुश्रुतके सूत्रस्थानके पहिले अध्यायमें लिखा है ॥ ११ ॥

इति श्रीमत्पण्डितज्ञारसरामविरचिते सुभाषानुवादविभूषितेऽनुपानदर्पणे आयुर्वेदविवेककथने द्वितीयः प्रमोदः ॥ २ ॥

---

# अथ तृतीयः प्रमोदः ।

### अथ मानविवेकं व्याख्यास्यामः ।

**न मानेन विना युक्तिर्द्रव्याणां ज्ञायते क्वचित् ॥**
**अतः प्रयोगकार्यार्थं मानमत्रोच्यते मया ॥ १ ॥**

अर्थ-अब इसके आगे मानविवेक वर्णन करेंगे । मान ( तोल ) विना द्रव्य ( औषध ) आदिकी योजना ( युक्ति ) नहीं हो सक्ती इसलिये इस ग्रंथमें प्रथम मानपरिभाषा लिखते हैं ॥ १ ॥

**यतो मन्दाग्नयो ह्रस्वा हीनसत्वा नराः कलौ ॥**
**अतस्तु मात्रा तद्योग्या प्रोच्यते सुज्ञसम्मता ॥ २ ॥**

अर्थ-यद्यपि वैद्यक ग्रंथोंमें १ मागध और २ कालिंग ये दो प्रकारके मान दिये हैं परन्तु हम ग्रंथविस्तारभयसे तथा कलियुगमें मंदाग्नि, छोटे और हीनबल मनुष्य होनेसे उनके योग्य कालिंग मा-

नानुसारही मात्रा वैद्योंको मन्तव्य होनेके कारण इस ग्रंथमें कालिंग-मानही वर्णन करते हैं ॥ २ ॥

**यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः ॥**
**यवद्वयेन गुंजा स्यात्त्रिगुंजो वल्ल उच्यते ॥ ३ ॥**

अर्थ–१२ सपेद सरसोंका १ यव, २ यवोंकी १ गुंजा, ३ गुंजा ( चिरंभी ) का १ वल्ल ॥ ३ ॥

**माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत्क्वचित् ॥**
**स्याच्चतुर्माषकैः शाणः स निष्कं टंक एव च ॥ ४ ॥**

अर्थ–८ गुंजा अथवा ७ गुंजाका १ मासा, ४ मासेका १ शाण जिसे निष्क तथा टंकभी कहते हैं ॥ ४ ॥

**गद्यानो माषकैः षड्भिः कर्षः स्याद्दशमाषकः ॥**
**चतुःकर्षैः पलं प्रोक्तं दशशाणमितं बुधैः ॥**
**चतुःपलैश्च कुडवं प्रस्थाद्याः पूर्ववन्मताः ॥ ५ ॥**
**शार्ङ्ग० खं० १ अ० १ ।**

अर्थ–६ मासेका १ गद्यान, १० मासेका १ कर्ष, ४ कर्षका १ पल, उस १ पलके १० शाण ( ४० मासे ) होते हैं और ४ पलका एक कुडव होता है इसके आगे प्रस्थ आदि मान मागध परिभाषानुसारही ग्रंथांतरसे जानना चाहिये यह मान शार्ङ्गधरसंहिताके प्रथम खंडके पहले अध्यायमें लिखा है ॥ ५ ॥

**स्थितिर्नास्त्येव मात्रायाः कालमग्निं वयो बलम् ॥**
**प्रकृतिं दोषदेशौ च दृष्ट्वा मात्रां प्रकल्पयेत् ॥ ६ ॥**

अर्थ–अब औषधमात्राका मान दर्शाते हैं । यद्यपि १ स्वरस, २ क्वाथ, ३ फांट, ४ हिम, ५ कल्क, ६ गुटिका, ७ चूर्ण, ८ अवलेह, ९ स्नेह ( तेल घृत ), १० आसव, ११ रस ( धातुभस्म ) आदिकी

मात्रा ग्रंथोंमें पृथक् २ वर्णन कीभी है तथापि समस्त ऋषिमुन्यादि वैद्यक ग्रंथकर्ताओंका अंतिम यही सिद्धांत है कि ग्रंथोक्त मात्रापरही वैद्य निश्चय न रक्खे किन्तु काल ( समय ), रोगीकी अग्नि, अवस्था, बल, प्रकृति, दोष ( वात, पित्त, कफ ) और देश ( अनूपादि ) को देखकर अपनी बुद्धिके अनुसार औषधमात्राकी योजना करे ॥ ६॥

**नाल्पं हन्त्यौषधं व्याधिं यथाम्भोऽल्पं महानलम्॥**
**अतिमात्रं च दोषाय यथा सस्ये बहूदकम् ॥७ ॥**

भा०प्र०पू०खं०भा०२।

अर्थ-क्योंकि जैसे बढी हुई अग्नि थोडे पानीसे शमन नहीं होती तैसेही बढा हुआ रोगभी नियत मात्रासे दूर नहीं होता तो वहां रोगानुसार मात्राको बढाना चाहिये और जहां अल्प रोग जान पडे वहां नियत मात्राकोभी अल्प ( थोडी ) कर देनी चाहिये क्योंकि जैसे यव आदि अन्नके छोटे २ अंकुरोंपर अधिक जल गिरनेसे वे अंकुर गल जाते हैं तैसेही थोडे रोगपर आधिक मात्रा होनेसे वह हानिही पहुंचाती है इसलिये वैद्यको उचित है कि मात्राको विचारके देवे। ऐसा भावप्रकाशके पूर्वखंडके दूसरे भागमें लिखा है ॥ ७ ॥

अथ नाडीविवेकं व्याख्यास्यामः।

**करस्यांगुष्ठमूले या धमनी जीवसाक्षिणी ॥**
**तच्चेष्टया सुखं दुःखं ज्ञेयं कायस्य पण्डितैः ॥८॥**

अर्थ-अब नाडीविवेक वर्णन करते हैं। रोगीकी नाडी देखनेके समय वैद्य प्रसन्नबुद्धि स्थिरचित्त होकर स्त्रीके वाम ( बांये ) और पुरुषके दाहने हाथके अंगूठेके मूलमें प्राणवायुकी साक्षिभूत जो नाडी है उसपर अपने सीधे हाथकी तर्जनी आदि ३ अंगुली रखके उस नाडीकी चेष्टा ( गति ) से शरीरके सुखदुःखको जाने ॥ ८ ॥

**नाडी धत्ते मरुत्कोपे जलौकासर्पयोर्गतिम् ॥**
**कलिंगकाकमण्डूकगतिं पित्तस्य कोपतः ॥ ९ ॥**

अर्थ—वातप्रकोपसे सर्प और जोककी गतिसमान, पित्तप्रकोपसे कलिंग ( पक्षिविशेष वा बुलबुल ) काक और मेंडुककी गति सदृश॥९॥

**हंसपारावतगतिं धत्ते श्लेष्मप्रकोपतः॥**
**लावतित्तिरवर्तीनां गमने सन्निपाततः ॥ १० ॥**

अर्थ—कफप्रकोपसे हंस तथा कबूतरकी गतिसमान, सन्निपात ( त्रिदोष ) प्रकोपसे लवा, तित्तिर तथा बटेरकी गतिसम ॥ १० ॥

**कदाचिन्मंदगमना कदाचिद्वेगवाहिनी ॥**
**द्विदोषकोपतो ज्ञेया हन्ति च स्थानविच्युता ॥ ११ ॥**

अर्थ—और द्विदोष (वातपित्त, वातकफ, पित्तकफ) प्रकोपसे कभी मंद और कभी वेगसे नाडी चलती है और जो नाडी अपने स्थानको छोड देती है वह रोगीको नष्ट कर देती है ॥ ११ ॥

**स्थित्वा स्थित्वा चलति या सा स्मृता प्राणनाशिनी ॥**
**अतिक्षीणा च शीता च जीवितं हन्त्यसंशयम् ॥१२॥**

अर्थ—ठहर २ के चलनेवाली तथा अत्यन्त क्षीण और जो ठंढी पड जावे सो नाडीभी रोगीके प्राणनाशिनीही जानो ॥ १२ ॥

**ज्वरकोपेन धमनी सोष्णा वेगवती भवेत् ॥**
**कामक्रोधाद्वेगवहा क्षीणा चिन्ताभयाप्लुता ॥ १३ ॥**

अर्थ—सामान्य ज्वरप्रकोपसे नाडी उष्णतापूर्वक अधिक वेगसे चलती है, काम और क्रोधसेभी नाडी अत्यंत वेगसे चलती है, चिन्ता तथा भययुक्त मनुष्योंकी नाडी क्षीण ( बलहीन ) चलती है ॥१३॥

---

१ कलिंगभृङ्गधूम्याटा इत्यमरः ।

मन्दाग्नेः क्षीणधातोश्च नाडी मन्दतरा भवेत् ॥
असृक्पूर्णा भवेत्कोष्णा गुर्वी सामा गरीयसी ॥ १४ ॥

अर्थ-जिसकी अग्नि मन्द हो तथा धातुक्षीण हो उन मनुष्योंकी नाडी अत्यंत मंद चलती है रक्तप्रकोपयुक्त नाडी कुछ २ उष्ण जड और भारी चलती है ॥ १४ ॥

लघ्वी वहति दीप्ताग्नेस्तथा वेगवती भवेत् ॥
सुखितस्य स्थिरा ज्ञेया तथा बलवती मता॥
चपला क्षुधितस्यापि तृप्तस्य वहति स्थिरा॥ १५ ॥

अर्थ-जिस मनुष्यकी जठराग्नि प्रदीप्त हो उसकी नाडी हलकी और वेगसे चलती है रोगरहित मनुष्यकी नाडी स्थिर और बलयुक्त चलती है भूखे मनुष्यकी नाडी चंचल और भोजनादिसे तृप्त हुए मनुष्यकी निश्चल ( स्थिरतायुक्त ) नाडी चलती है ॥ १५ ॥

भाष्यं नाडीपरिक्षार्थमेते श्लोकाः शार्ङ्गधरस्य प्रथमखंडस्य तृतीयाध्याये कथिताः अतोऽधिकाश्चापि सन्त्यनेका आयुर्वेदीयग्रन्थेषु श्लोकाः परं च तत्र तेषां लेखनं तद्ग्रंथस्य विस्तारार्थमेव कुतो यथा रुग्विनिश्चयं निदानेन भवति न भवति तथा नाड्या तदेवाह भिषग्वरो वाग्भटः कवीश्वरो लोलिंबराजश्च ॥

अर्थ-नाडीपरीक्षार्थ ये सब श्लोक शार्ङ्गधरके प्रथमखंडके तीसरे अध्यायमें वर्णन किये हैं । इसमें अधिकभी श्लोक कई वैद्यक ग्रंथोंमें लिखे हैं परंतु उनका लिखना केवल उस ग्रंथके विस्तारार्थही है क्यों कि रोगनिश्चय जैसे निदानसे होता है वैसा नाडीसे नहीं होता अत एव वैद्यश्रेष्ठ वाग्भट्टजी तथा कवीश्वर लोलिंबराजजीनेभी कहा है कि ॥

रोगमादौ परीक्षेत तदनंतरमौषधम् ॥
ततः कर्म्म भिषक् पश्चात् ज्ञानपूर्वं समाचरेत्॥१६॥
वा० भ० ।

आदौ निदानविधाना विदध्याद्व्याधिनिश्चयम् ॥
ततः साध्यं समीक्षेत पश्चाद्भिषगुपाचरेत् ॥ १७ ॥
वै० जी० वि० १ ।

अर्थ—प्रथम वैद्य निदानविधिसे रोगका निश्चय करे फिर साध्य असाध्यका निश्चय करे नंतर ज्ञानपूर्वक चिकित्सा करे अर्थात् साध्य हो तो उसका यत्न और असाध्य रोग हो तो उसका त्याग कर देवे ॥ १६ ॥ १७ ॥

इति श्रीमत्पंडितज्ञारसरामविरचिते सुभाषानुवादविभूषितेऽनुपानदर्पणे मानविवेकनाडीविवेककथने तृतीयः प्रमोदः ॥ ३ ॥

## अथ चतुर्थः प्रमोदः ।

अथातोऽनुपानविवेकं व्याख्यास्यामः ।

अम्लेन केचिद्विहिता मनुष्या माधुर्य्ययोगे प्रणयीभवन्ति ॥ तथाम्लयोगे मधुरेण तृप्तास्तेषां यथेष्टं प्रवदंति पथ्यम् ॥ १ ॥

अर्थ—अब इसके आगे अनुपानविवेक वर्णन करेंगे। अन्न, औषध और रस आदिके पीछे या संगही जो सेवन ( पान ) किया जावे उसे अनुपान कहते हैं । कई मनुष्य खटाईसे विरक्त ( अप्रसन्न ) और मिठाईसे अनुरक्त ( प्रसन्न ) रहते हैं और कई मिठाईसे विरक्त और खटाईसे अनुरक्त रहते हैं उनको यथायोग्य ( उनके स्वभावानुसार ) पथ्य होना उचित है ॥ १ ॥

**शीतोष्णतोयासवमद्ययूष[1]फलाम्लधान्याम्लपयोरसानाम् ॥ यस्यानुपानं तु हितं भवेद्यत्तस्मै प्रदेयं त्विह मात्रया तत् ॥ २ ॥**

अर्थ-ठंढा तथा उष्ण पानी आसव ( अर्क ), मद्य ( मदिरा ), यूष ( मूंग आदि वस्तुओंका औटाके निकाला हुआ साररूपी रस ), फलकी खटाई, कांजी, दूध, रस ( जो कि गीली औषधसे निकाला गया हो ) इनमेंसे जिस मनुष्यको जो हित समझावे वही उसीको मात्रा ( प्रमाणसे ) अनुपान देना चाहिये ॥ २ ॥

**व्याधिं च कालं च विभाव्य धीरैर्द्रव्याणि योज्यानि च तानि तानि ॥ सर्वानुपानेषु वरं वदंति मेध्यं यदंभः शुचिभाजनस्थम् ॥ ३ ॥**

अर्थ-रोग तथा समयके अनुकूल खानेकी वस्तुओंको विचार कर दे और शुद्ध व स्वच्छ पात्रमें रक्खा हुआ पानी सब अनुपानोंमें श्रेष्ठ होनेसे पीनेको देना चाहिये ॥ ३ ॥

**लोकस्य जन्मप्रभृति प्रशस्तं तोयात्मकाः सर्वरसाश्च दृष्टाः ॥ संक्षेप एषोऽभिहितोऽनुपानेष्वतः परं विस्तरतोऽभिधास्ये ॥ ४ ॥**

अर्थ-संसारको जन्मसे मरणपर्यंत पानी हितही है क्योंकी सब रसादि पानीसेही होते हैं इसलिये किसी अनुपानमें पानी वर्जित नहीं यह संक्षेपसे अनुपान कह अब इसके आगे विस्तारसे कहते हैं ॥४॥

**उष्णोदकानुपानं तु स्नेहानामथ शस्यते ॥**
**ऋते भल्लातकस्नेहात्स्नेहात्तौवरकात्तथा ॥ ५ ॥**

अर्थ-भिलावा और तुर ( जिसके केशरके समान पत्ते और

---

१ यूषः स्मृतो वैदलानामष्टादशगुणेंभासि मदनपालनिघंटाविति ।

उडदके समान होते हैं ) तेलको छोडकर समस्त तेलादि चिकने पदार्थोंके भक्षणमें उष्ण पानी अनुपान है ॥ ५ ॥

**अनुपानं वदन्त्येके तैले यूषाम्लकांजिके ॥**
**शीतोदकं माक्षिकस्य पिष्टान्नस्य च सर्वशः ॥ ६ ॥**

अर्थ–कई आचार्य कहते हैं कि तैल, यूष, खटाई, कांजी, सहत, और पीसे हुए अन्न ( सत्तु आदि ) के भक्षणमें ठंढा पानी अनुपान है ॥ ६ ॥

**दधिपायसमद्यार्तिविषजुष्टे तथैव च ॥**
**केचित्पिष्टमयस्याहुरनुपानं सुखोदकम् ॥ ७ ॥**

अर्थ–मद्यपानजन्य पीडा और विषभक्षणमें दही और दूध अनुपान है कई आचार्य पीसे अन्न भक्षणका अनुपान सुखोदक ( थोडा उष्ण पानी ) कहते हैं ॥ ७ ॥

**पयो मांसरसो वापि शालिमुद्गादिभोजिनाम् ॥**
**युद्धाध्वातपसंतापविषमद्यरुजासु च ॥ ८ ॥**

अर्थ–धान मूंग आदि भक्षण करनेवालोंको दूध या मांसरस अनुपान है। युद्ध मार्ग धूप अग्निज्वाला इनसे थके हुओंको और विषज तथा मद्यज रोगयुक्त पुरुषोंकोभी दूध या मांसरसही अनुपान है ॥८॥

**माषादेरनुपानं तु धान्याम्लं दधि मस्तु वा ॥**
**मद्यं मद्योचितानां तु सर्वमांसेषु पूजितम् ॥ ९ ॥**

अर्थ–उडद आदिका अनुपान कांजी अथवा मट्ठा है। मांसभक्षणमें मद्य पीनेवालोंको मद्यही अनुपान है ॥ ९ ॥

**अमद्यपानामुदकं फलाम्लं वा प्रशस्यते ॥**
**क्षीरं घर्म्माध्वभाष्यस्त्रीक्लान्तानाममृतोपमम् ॥ १० ॥**

अर्थ–मद्य न पीनेवालोंको जल या फलकी खटाई अनुपान है

घाम ( धूप ), मार्ग ( वाट, पथ, रस्ता ), पढाने या पढने और स्त्रियोंसे थके हुए मनुष्यको दूध अमृतके समान अनुपान है ॥ १० ॥

सुराकृशानां स्थूलानामनुपानं मधूदकम् ॥
निरामयानां चित्रं तु भुक्तमध्ये प्रकीर्तितम् ॥ ११ ॥

अर्थ-मद्य ( मदिरा, दारु, सराफ, बरांडी ) से दुबले और अत्यंत मोटोंको जलयुक्त मधु ( सहत ) अनुपान है रोगरहित मनुष्योंको अनेक प्रकारकी वस्तु भोजनके मध्य २ ( बीच २ ) में खिलानाही अनुपान है ॥ ११ ॥

स्निग्धोष्णं मारुते पथ्यं कफे रूक्षोष्णमिष्यते ॥
अनुपानं हितं चापि पित्ते मधुरशीतलम् ॥ १२ ॥

अर्थ-वातरोगमें चिकना, उष्ण; कफरोगमें उष्ण, रूखा और पित्तमें मीठा तथा ठंढा अनुपान पथ्य है ॥ १२ ॥

हितं शोणितपित्तिभ्यः क्षीरमिक्षुरसस्तथा ॥
अर्कशेलुशिरीषाणामासवास्तु विषार्तिषु ॥ १३ ॥

अर्थ-रक्तपित्तमें दूध और ऊंस ( सांठे ) का रस अनुपान पथ्य है। विषजनित रोगमें अर्क ( आकडा, अकौवा ), रीठा और सिरसका आसव अनुपान है ॥ १३ ॥

अतः परं तु वर्गाणामनुपानं पृथक् पृथक् ॥
प्रवक्ष्याम्यनुपूर्वेण सर्वेषामेव मे शृणु ॥ १४ ॥

अर्थ-इसके पश्चात् वर्ग वर्गका पृथक् २ अनुपान वर्णन करते हैं ॥ १४ ॥

तत्र पूर्वसस्यजातीनां बदराम्लवैदलानां धान्याम्लम् १५

अर्थ-सस्यजाति ( शूकधान्य[1], शमीधान्य, कुधान्य[2] ) का खट्टे बेर

१ शूकधान्य और शमीधान्य उसको कहते हैं जो कि बिनही ऋतुमें उत्पन्न होते हैं। २ कुधान्य कोदू, सांवा, वांसके बीज और प्रियंगु आदिको कहते हैं।

और वैदल ( जिनकी दाल बनती है जैसे मूंग, उडद, मसूर, मटर, तूवर, चने आदि ) इनकी कांजी अनुपान है ॥ १५ ॥

**अम्लानां फलानां पद्मोत्पलकन्दासवः ॥ १६ ॥**

अर्थ–खट्टे फलोंको नीले कमलके कंदका आसव अनुपान है ॥ १६ ॥

**कषायाणां दाडिमवेत्रासवः ॥ १७ ॥**

अर्थ–कषैले भोजनको दाडिम तथा वेतका आसव अनुपान है १७

**मधुराणां त्रिकटुकयुक्तः कन्दासवः ॥ १८ ॥**

अर्थ–मीठे भोजनको सोंठ, मिरच, पीपलयुक्त कंदोंका आसव अनुपान है ॥ १८ ॥

**तालफलादीनां धान्याम्लम् ॥ १९ ॥**

अर्थ–ताडफल, नारियल, कटहर और केलेको धानकी कांजी अनुपान है ॥ १९ ॥

**कटुकानां दूर्वानलवेत्रासवः ॥ २० ॥**

अर्थ–चरपरे भोजनको दूब, नल ( देवनल ) और वेत्र ( वेंत ) का आसव अनुपान है ॥ २० ॥

**पिप्पल्यादीनां श्वदंष्ट्रावसुकासवः ॥ २१ ॥**

अर्थ–पीपल, पीपलामूल, चव्य (चाभ ), चित्रक ( चीता ), अदरक, काली मिर्च, गजपीपल, रेणुक, अजमोदा, इन्द्रजव, पाठा, जीरा, सरसों, पहाडी नींबफल, हींग, भार्ङ्गी, महुआ, अतीस, वच, वायविडंग और कटुकी इस पिप्पल्यादि वर्गको गोखरू, वसुक (बुक केदारगिरी बगहुल प्रसिद्ध ) का आसव अनुपान है ॥ २१ ॥

**कूष्माण्डादीनां दार्वीकरीरासवः ॥ २२ ॥**

अर्थ–कूष्मांड (कद्दू ), लौकी( सफेद फूलका कद्दू ) और तरबूज आदि शाकोंको दार्वी और करीनलका आसव अनुपान है ॥ २२ ॥

**चंचुप्रभृतीनां लोध्रासवः ॥ २३ ॥**

अर्थ–चूच ( लाली ), जाई, जुई, जीवंती ( शाकभेद ), कुंदरु,

करहारी, भिलावा,वृद्धदारुक, वृक्षादनी ( वृक्षभेद ), फंजी ( वाड ), सेमर, रीठा, वनस्पतिप्रसव ( वृक्षभेद ), शण ( अंबाडेकी भाजी दक्षिणमें प्रसिद्ध ) और कचनार इन सबोंको लोधका आसव अनुपान है ॥ २३ ॥

**जीवन्त्यादीनां त्रिफलासवः ॥ २४ ॥**

**कुसुंभशाकस्य स एव ॥ २५ ॥**

अर्थ-जीवंत्या[1]दि वर्गको और कसूंभ सागको त्रिफलेका आसव अनुपान है ॥ २४ ॥ २५ ॥

**मण्डूकपर्ण्यादीनां महापञ्चमूलासवः ॥ २६ ॥**

अर्थ-ब्राह्मी, हुलहुल, पीपल, गुरच, गोभी, बावची, मटर, दोनों कटियाली, बैंगन, करेला, एरंड, पित्तपापडा, चिरायता, ककोडा, नीमतुरै, वेतका अग्रभाग और रूषादिको बृहत्पञ्चमूलका आसव अनुपान है ॥ २६ ॥

**तालमस्तकादीनामम्लफलासवः ॥ २७ ॥**

अर्थ-ताडके गूदे आदिको खट्टे फलोंका आसव अनुपान है॥२७॥

**सैन्धवादीनां सुरासव आरनालं च ॥ २८ ॥**

अर्थ-सेंधानोन, समुद्रनोन, बिडनोन, सौंचलनोन, सांभरानोन और उद्भिदनोन ( जो कहीं खारकी भूमिमेंसे निकाला हुआ पानी सूर्यकी उष्णतासे या अग्निसे जमाया जाता है ) इन सबोंको मद्य आसव और आरनाल अनुपान है ॥ २८ ॥

**तोयं वा सर्वत्रेति ॥ २९ ॥**

अर्थ-अथवा सर्वत्र केवल जलही अनुपान उत्तम है ॥ २९ ॥

**भवन्ति चात्र-सर्वेषामनुपानानां माहेन्द्रं तोयमुत्तमम् ॥**
**सात्म्यं यस्य तु यत्तोयं तत्तस्मै हितमुच्यते ॥ ३० ॥**

---

१ जीवंत्यादिवर्ग विस्तारपूर्वक सुश्रुतमें देखो ।

अर्थ–यहां ऐसा जानो कि सब अनुपानोंमें अंतरिक्ष ( जो वर्षता हुआ पानीही पात्रमें ले लिया जावे ) वह उत्तम है या जिसको जो पानी अनुकूल हो उसको वही हित है ॥ ३० ॥

उष्णं वाते कफे तोयं पित्ते रक्ते च शीतलम् ॥
दोषवद्गुरु वा भुक्तमतिमात्रमथापि वा ॥ ३१ ॥

अर्थ–वात और कफजनित रोगमें उष्ण पानी, पित्त और रक्तज रोगमें ठंढा पानी अनुपानमें देना उचित है । दोषयुक्त या प्रमाणसे अधिक खाया हुआ अन्नभी ॥ ३१ ॥

यथोक्तेनानुपानेन सुखमन्नं प्रजीर्य्यति ॥
रोचनं बृंहणं वृष्यं दोषसंघातभेदनम् ॥ ३२ ॥

अर्थ–उचित अनुपानसे सुखपूर्वक पच जाता है और उचित अनुपान रुचिवर्द्धक, बृंहण ( वीर्यवर्द्धक ), पराक्रमविकाशक, दोषनाशक ॥ ३२ ॥

तर्पणं मार्दवकरं श्रमक्लमहरं सुखम् ॥
दीपनं दोषशमनं पिपासाच्छेदनं परम् ॥ ३३ ॥

अर्थ–तृप्ति तथा कोमलताकारक, श्रम-भ्रमहारक, सुखदायक, अग्निउन्नायक, दोष ( वात, पित्त, कफ,) कोपसंहारक, तृषा ( प्यास)-दारक ॥ ३३ ॥

बल्यं वर्णकरं सम्यगनुपानं सदोच्यते ॥
तदादौ कर्षयेत्पीतं स्थापयेन्मध्यसेवितम् ॥ ३४ ॥

अर्थ–और बल तथा वर्णकारक होता है । सो अनुपान यदि भोजनके पहलेही पान किया जावे तो शरीरको दुर्बल और मध्यमें जैसाका तैसा ( न घटावे न बढावे ॥ ३४ ॥

पश्चात्पीतं बृंहयति तस्माद्वीक्ष्य प्रयोजयेत् ॥
स्थिरतां गतमक्लिन्नमन्नमद्रवपायिनाम् ॥ ३५ ॥

अर्थ-और अंतमें पीनेसे शरीरको पुष्ट करता है इसलिये विचारके अनुपान देवे जल आदि पीये विना भक्षित अन्न स्थिर और कडा रहनेसे तृप्ति देनेवाला नहीं होता ॥ ३५ ॥

**भवत्याबाधजननमनुपानमतः पिबेत् ॥**
**न पिबेच्छ्वासकासार्तो रोगे चाप्यूर्ध्वजत्रुगे ॥३६॥**

अर्थ-वरन पीडाकारक हो जाता है इसलिये भोजनके पश्चात् अनुपान पीनाही चाहिये। श्वास-कासवाला ठुड्डीसे ऊपरके अंगमें जिसके रोग हो वह ॥ ३६ ॥

**क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः ॥**
**पीत्वाऽध्वभाष्याध्ययनगेयस्वप्नान्न शीलयेत् ॥३७॥**

अर्थ-उरःक्षती ( जिसके हृदयमें घाव हो गया हो ), प्रसेकी ( जिसके मुखसे लारें गिरें वा पसीनेमें भीगा हुआ ) और जिसका स्वर ( शब्द ) बैठ गया हो ये मनुष्य अनुपान न पीवे और इनसे व्यतिरिक्त ( रोगरहित मनुष्य ) भी अनुपान पीकर मार्गका चलना, अधिक बोलना,पढना,गाना और सोना ये कर्म्म कदापि न करें॥३७॥

**प्रदूष्यामाशयं तद्धि तस्य कंठोरसि स्थितम् ॥**
**स्यन्दाग्निसादच्छर्द्यादीनामयान् जनयेद्बहून् ॥३८॥**

अर्थ-उक्त कर्म्मोंके करनेसे वह अनुपान आमाशयको दूषित करके उस मनुष्यके कंठ और हृदयमें प्राप्त होकर कफस्राव, मंदाग्नि और वमन ( उलटी ) आदि रोगोंको उत्पन्न करता है ॥ ३८ ॥

**गुरुलाघवचिन्तेयं स्वभावं नातिवर्तते ॥**
**तथा संस्कारमात्रांतकालांश्चाप्युत्तरोत्तरम् ॥ ३९ ॥**

अर्थ-द्रव्योंका भारीपन, हलकापन, स्वभाव, संस्कार, मात्रा और समय ये कभी नहीं छूटते और सब एकसे दूसरा बलवान् है ॥ ३९ ॥

मंदकर्म्मानलारोग्याः सुकुमाराः सुखोचिताः ॥
जन्तवो ये तु तेषां हि चिन्तेयं परिकीर्तिता ॥४०॥

अर्थ—इसलिये विचारके वैद्यने अनुपान देना चाहिये क्योंकि आलसी, मंदाग्निवाले, सुकुमार और सुखसे रहनेवाले मनुष्योंके लिये उक्त अनुपानविधिका विचारना है ॥ ४० ॥

बलिनः खरभक्षाश्च ये च दीप्ताग्नयो नराः ॥
कर्म्मनित्याश्च ये तेषां नावश्यं परिकीर्तयेत् ॥ ४१ ॥
सुश्रु० सू० स्था० अ० ४६ ।

अर्थ—और जो बलवान्, कठिन भोजन करनेवाले, तीव्राग्नि ( तेज अग्नि ) वाले तथा प्रतिदिन परिश्रम करनेवाले पुरुषोंके लिये उक्त विधिके विशेष विचारकी कोई आवश्यकता नहीं । यह अनुपानविधि सुश्रुतसंहिताके सूत्रस्थानके ४६ वें अध्यायमें लिखा है ॥ ४१ ॥

अथ कतिपयरोगेषु दुग्धानुपानान्याह ।

क्षीरोचितस्य प्रक्षीणश्लेष्मणो दाहतृड्वतः ॥
क्षीरं पित्तानिलार्तस्य पथ्यमप्यातिसारिणः ॥ ४२ ॥

अर्थ—अब कितनेक रोगोंपर दूधके अनुपान कहते हैं । दूध देने योग्य ( जिसके शरीरको दूध अनुकूल हो ) उसको, क्षीण कफवालेको, दाह तथा तृषावालेको, पित्तवातसे पीडितको और अतिसारवाले मनुष्यको दूध देना पथ्य है ॥ ४२ ॥

तद्वपुर्लंघनोत्तप्तं प्लुष्टं वनमिवाग्निना ॥
दिव्यांबु जीवयेत्तस्य ज्वरं चाशु नियच्छति ॥४३ ॥

अर्थ—वह दूध जैसे ग्रीष्माग्निसे तप्त वनके समान लंघनसे तपायमान रोगीके शरीरको वर्षाके जलकी नाई जिला देता है और उसके ज्वरकोभी शीघ्रही नाश कर देता है ॥ ४३ ॥

**संस्कृतं शीतमुष्णं वा तस्माद्धारोष्णमेव वा ॥**
**विभज्य काले युंजीत ज्वरिणं हंत्यतोन्यथा ॥ ४४ ॥**

अर्थ-औषधोंसे सिद्ध किया हुआ, ठंढा अथवा उष्ण ( गरम ) या धारोष्ण ( धारासेही निकला हुआ गरम २ ) दूधको समयके अनुकूल रोगानुसार विचार कर जिसको जैसा हित समझे उसको वैसाही वैद्यने देना चाहिये। अन्यथा देनेसे अमृतसमान दूध विषपान-सदृश होकर ज्वरयुक्त मनुष्यको नष्ट कर देता है ॥ ४४ ॥

**पयः सशुंठीखर्जूरमृद्वीकाशर्कराघृतम् ॥**
**शृतशीतं मधुयुतं तृड्दाहज्वरनाशनम् ॥ ४५ ॥**

अर्थ-सोंठ, खजूर ( खारक ), मुनक्का, मिश्री ( खांड ) और घी इन्होंसे युक्त दूधको औटाकर ठंढा करे और उसमें सहत मिलाकर पिलावे तो वह दूध दाह, तृषा और ज्वरका नाश करता है ॥ ४५ ॥

**तद्वद्द्राक्षाबलायष्टीसारिवाकणचंदनैः ॥**
**चतुर्गुणेनांभसा वा पिप्पल्या वा शृतं पिबेत् ॥४६ ॥**

अर्थ-इसी प्रकार दाख, खरेटी, मुलहटी, सारिवा, छोटी पीपल और चंदन इन सर्वसहित औटाकर ठंढा किया हुआ दूध अथवा इनके क्वाथमें सिद्ध किया हुआ दूध अथवा चौगुने पानीकरके सिद्ध किया हुआ दूध या केवल पीपलीसे सिद्ध किया हुआ दूध पिलानेसे वह दूध दाह, तृषा और ज्वरका नाश करता है ॥ ४६ ॥

**कासाच्छ्वासाच्छिरःशूलात्पार्श्वशूलाच्चिरज्वरात् ॥**
**मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥ ४७ ॥**

अर्थ-पञ्चमूल[1]में सिद्ध किये हुए दूधको पिलानेसे ज्वरयुक्त रोगी-

---

१ शालिपर्णी ( जिसे गौडदेशमें शालपाणीभी कहते हैं ), पृश्निपर्णी ( जिसे मध्यदेशमें चंकरोत और पिठवनी कहते हैं ), छोटी कटियाली, बडी कटियाली और गोखरू इसे लघुपञ्चमूल कहते हैं।

भी कास, श्वास, शिरकी शूल, पार्श्वशूल और पुराने ज्वरसे छूट जाता है ॥ ४७ ॥

**शृतमेरण्डमूलेन बालबिल्वेन वा ज्वरात् ॥**
**धारोष्णं वा पयः पीत्वा विबद्धानिलवर्चसः ॥ ४८ ॥**

अर्थ–एरण्ड मूलमें अथवा कच्चे बेलके गूदेमें औटाकर सिद्ध किये हुए दुग्धपानसे रोगी ज्वरसे छूट जाता है। धारोष्ण दूधके पीनेसे अधोवायुका रुकना, मलकी रुकावट ॥ ४८ ॥

**सरक्तपित्तातिसृतेः सतृट्शूलप्रवाहिकात् ॥**
**सिद्धं शुण्ठीबलाव्याघ्रीगोकण्टकगुडैः पयः ॥ ४९ ॥**

अर्थ–रक्त तथा फेनयुक्त अतिसार और तृषा, शूलयुक्त प्रवाहिका ये सब रोग दूर हो जाते हैं। सोंठ, खरेटी, कटियाली, गोखरू और गुड इन करके सिद्ध किया ( औटाया ) हुआ दूध पिलानेसे ॥४९॥

**शोथमूत्रशकृद्वातविबन्धज्वरकासजित् ॥**
**वृश्चीकबिल्ववर्षाभूसाधितं ज्वरशोफनुत् ॥**
**शिंशपासारसिद्धं वा क्षीरमाशु ज्वरापहम् ॥ ५० ॥**

वाग्भ० चि० स्था० अ० २ ।

अर्थ–शोथ ( सूजन ), मूत्र तथा मलका रुकना, ज्वर और खांसी इन सबका नाश करता है तथा सीसमके गूदेमें सिद्ध किया हुआ दूध शीघ्रही ज्वरका नाश करता है। ऐसा वाग्भट्टके चिकित्सास्थानके दूसरे अध्यायमें लिखा है ॥ ५० ॥

**सौभाग्यपुष्टिबलशुक्रविवर्धनानि किं सन्ति नो**
**भुवि बहूनि रसायनानि॥ कन्दर्पवर्धिनि परंतु सि-**
**ताज्ययुक्ताद्दुग्धादृते न मम कोपि मतः प्रयोगः॥५१॥**

वै० जी० वि० ५ ।

अर्थ–लोलिंबराजजी अपनी स्त्रीसे कहते हैं कि हे कंदर्पवर्धिनि

( कामदेवको बढानेवाली स्त्री ) ! सुंदरता, पुष्टता, बल और वीर्यको बढानेवाली रसायनरूप क्या बहुतसी वस्तुएं पृथ्वीमें नहीं हैं किन्तु बहुतेरे हैं परन्तु मिश्री और घृतसहित दूध जैसा सुंदरता, पुष्टता, बल और वीर्यको बढानेवाला है तैसा मेरे मतमें कोई दूसरा प्रयोग ( उपाय ) नहीं है ॥ ५१ ॥

अथ योगराजगुग्गुल्वनुपानानि ।

रास्नादिक्काथसंयुक्तो विविधं हन्ति मारुतम् ॥
कांकोल्यादिशृतात् पित्तं कफमारग्वधादिना ॥५२॥

अर्थ-अब योगराजगुग्गुलके अनुपानोंको वर्णन करते हैं। रास्नादि क्काथसंग वातरोगको, कांकोल्यादि क्काथसंग पित्तरोगको, आरग्वधादि क्काथसंग कफरोगको ॥ ५२ ॥

दार्वीशृतेन मेहांश्च गोमूत्रेणैव पाण्डुताम् ॥
मेदोवृद्धिं च मधुना कुष्ठे निंबशृतेन वा ॥ ५३ ॥

अर्थ-दारुहलदीके काढेके संग प्रमेहको, गोमूत्रसंग पांडुरोगको, सहतसंग मेदोवृद्धिको, निंबके क्काथके संग कुष्ठको ॥ ५३ ॥

छिन्नाक्काथेन वातास्रं शोथं शूलं कणाशृतात् ॥
पाटलाक्काथसहितो विषं मूषकजं जयेत् ॥ ५४ ॥

अर्थ-गुर्च (गुडवेल) के क्काथसंग रक्तवातको, पीपलीके क्काथसंग शोथ तथा शूलको, सिरसके क्काथसंग मूषकदंश विषको ॥ ५४ ॥

त्रिफलाक्काथसहितो नेत्रार्तिं हन्ति दारुणाम् ॥
पुनर्नवादेः क्काथेन हन्यात्सर्वोदराण्यपि ॥ ५५ ॥
शार्ङ्ग० खं० २ अ० ७ ।

अर्थ-त्रिफलाके क्काथसंग नेत्ररोगको और पुनर्नवा ( साठी ) के क्काथसंग देनेसे समस्त उदररोगको योगराज गुग्गुल नाश करता है । ऐसा शार्ङ्गधरके दूसरे खंडके सातवें अध्यायमें लिखा है ॥५५॥

अथ नारायणचूर्णानुपानान्याह ।

**दद्याद्युक्तानुपानेन तथाध्माने सुरादिभिः ॥**
**गुल्मे बदरनीरेण विड्संगे दधिमस्तुना ॥ ५६ ॥**

अर्थ–अब नारायणचूर्ण अनुपानोंको वर्णन करते हैं । आध्मान ( पेट फूलने ) में मदिरा आदिके संग, गुल्ममें बेरके क्काथसंग, मलबद्धमें दहीके पानीसंग ॥ ५६ ॥

**उष्णांबुभिश्च जीर्णे च वृक्षाल्मैः परिकर्तृषु ॥**
**उष्ट्रीदुग्धेनोदरेषु तथा तक्रेण वा गवाम् ॥ ५७ ॥**

अर्थ–अजीर्णमें उष्ण ( गरम ) पानीसंग, परिकर्त (गुदामें कतरनेके समान पीडा करनेवाले ) रोगमें अमलीके क्काथसंग, उदररोगमें ऊंटनीके दूधसंग अथवा गऊकी छाछसंग ॥ ५७ ॥

**प्रसन्नया वातरोगे दाडिमांभोभिरर्शसि ॥**
**द्विविधे च विषे दद्यात् घृतेन विषनाशनम् ॥**
**चूर्णं नारायणं नाम दुष्टरोगगणापहम् ॥ ५८ ॥**

शार्ङ्ग० खं० २ अ० ६ ।

अर्थ–वातरोगमें सुरामंडसंग, अर्श ( मूलव्याधि ) में अनारके रससंग और स्थावर तथा जंगमविषमें घीके संग और उक्त रोगोंसे व्यतिरिक्त रोगोंमें जैसा योग्य अनुपान समझे उसके संग देनेसे यह नारायणचूर्ण उक्त रोगादि समस्त दुष्टरोगोंका नाश करता है । ऐसा शार्ङ्गधरसंहिताके दूसरे खंडके छठे अध्यायमें लिखा है ॥ ५८ ॥

अथ निर्गुण्ड्यनुपानानि ।

**प्रस्थ[1] निर्गुण्डिचूर्णस्य गोमूत्रेण समं पिबेत् ॥**
**दशरात्रप्रयोगेन कुष्ठनाशो भवेद् ध्रुवम् ॥ ५९ ॥**

---

[1] शरावोष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः ॥
शरावाभ्यां भवेत्प्रस्थश्चतुःप्रस्थैस्तथाढकम् ॥ १ ॥ शा० ।

अर्थ-अब निर्गुण्डीके अनुपान कहते हैं । १ प्रस्थ ( ५३ तोले ४ मासे भार ) निर्गुंडीके चूर्णको गोमूत्रसंग दशरात्रि पर्यन्त पिलानेसे कुष्ठ ( कोढ ) दूर हो जाता है ॥ ५९ ॥

**निर्गुंडीचूर्णमादाय घृतेन सह भक्षयेत् ॥**
**कृशस्तु दुर्बलो वापि बलवीर्ययुतो भवेत् ॥ ६० ॥**

अर्थ-निर्गुण्डीचूर्णको घीके संग सेवन करनेसे कृश तथा बलहीनभी मनुष्य बलवीर्ययुक्त हो जाता है ॥ ६० ॥

**निर्गुण्डीचूर्णमादाय पिबेदुष्णेन वारिणा ॥**
**सप्तरात्रप्रयोगेन रोगमुक्तो भवेन्नरः ॥ ६१ ॥**

अर्थ-निर्गुंडीचूर्णको गरम २ पानीके संग सात रात्रिपर्यंत सेवन करनेसे रोगरहित मनुष्य हो जाता है ॥ ६१ ॥

**निर्गुंडीमूलमुद्धृत्य गृहे च धारयेद्बुधः ॥**
**नश्यन्ति सर्वविघ्नानि गृहान्नागाश्च सर्वशः ॥ ६२ ॥**

अर्थ-निर्गुंडीके मूल ( जड ) को उखाडके यदि गृहस्थ अपने घरमें रक्खे तो उसके घरमें सर्प नहीं रहता और सभ प्रकारके विघ्न दूर हो जाते हैं ॥ ६२ ॥

## अथ भृंगराजानुपानानि ।

**भृंगराजपत्ररसं कृष्णजीरसमं पिबेत् ॥**
**तैलेन सह संदद्याद्वलीपलितवर्जितः ॥ ६३ ॥**

अर्थ-अब भृंगराजके अनुपान कहते हैं। भृंगराजके पत्तोंके रसको काले जीरेके अथवा तैलके संग पान करे तो वह मनुष्य वृद्धावस्थामेंभी तरुणके समान बलवान् रहे ॥ ६३ ॥

**भृंगराजरसं चैव गुडूचीरससंयुतम् ॥**
**मासमात्रप्रयोगेन सर्वव्याधिर्विनश्यति ॥ ६४ ॥**

अर्थ—भृंगराजके रसको गुर्चके रससंग १ मास पर्यन्त पीवे तो सब प्रकारके रोग दूर होंय ॥ ६४ ॥

अथ सकलरोगेषु हरीतक्यनुपानानि ।

सितायुक्ता च शरदि हेमन्ते नागरेण च ॥
शिशिरे पिप्पलीयुक्ता वसन्ते मधुना सह ॥ ६५ ॥

अर्थ—अब सब रोगोंपर हरीतकी ( हर्ड ) के अनुपानोंको कहते हैं । शरदऋतुमें मिश्रीके संग, हेमंतमें सोंठके संग, शिशिरमें छोटी पीपलके संग, वसन्तमें सहतके संग ॥ ६५ ॥

ग्रीष्मे च गुडसंयुक्ता वर्षासु लवणेन च ॥
अनेनैव विधानेन भक्षयेद्यो हरीतकीम् ॥ ६६ ॥

अर्थ—ग्रीष्मऋतुमें गुडके संग और वर्षामें सैंधव ( सेंधानोन ) के संग हरीतकी ( हिरडा हर्ड ) को खानेसे ॥ ६६ ॥

तस्य वृद्धिर्बलं वीर्य्यमारोग्यं स्थिरयौवनम् ॥
अग्निर्दहति काष्ठानि तनुरोगान् हरीतकी ॥ ६७ ॥

अर्थ—मनुष्य रोगरहित और बलवीर्यसहित आयुपर्यन्त रहता है। जैसे अग्नि काष्ठको दग्ध कर देती है तैसेही शरीरके समस्त रोगों-को हरीतकी नाश कर देती है ॥ ६७ ॥

कदाचित्कुप्यते माता नोदरस्था हरीतकी ॥
मातेव सर्वदा ज्ञेया हितदात्री हरीतकी ॥ ६८ ॥

इति गौरिकांचलिकातंत्रे ।

अर्थ—कोई समय अपने बालकपर माता क्रोधित हो जाती है पर पेटमें हरीतकी जाकर कुपित नहीं होती इसलिये माताके समान हित करनेवाली हरीतकी ( हर्ड ) को जानना चाहिये। ये निर्गुंडी, भृंगराज और हरीतकीके उक्त अनुपान गौरिकांचलिकातंत्रमें लिखे हैं ॥६८॥

अन्यच्च-ग्रीष्मे तुल्यगुडां सुसैन्धवयुतां मेघावनेद्धम्बरे तुल्यां शर्करया शरद्यमलया शुण्ठ्या तुषारागमे ॥ पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजिता राजन् प्राप्य हरीतकीमिव रुजो नश्यन्ति ते शत्रवः ॥ ६९ ॥ मद० निघं० ।

अर्थ-ग्रीष्मऋतुमें समानभाग गुडके संग, वर्षाऋतुमें सेंधानोनके संग, शरदऋतुमें समभाग शक्करके संग, हेमंतऋतुमें सोंठके संग, शिशिरऋतुमें पीपलके संग, वसंतऋतुमें सहतके संग हरड भक्षण करनेसे जैसे सब रोग नष्ट होते हैं तैसे हे राजन्! तेरे शत्रुभी तुझको प्राप्त होतेही नष्ट होवें । इसी प्रकार हरीतकीके अनुपान मदनपाल निघंटुमें लिखे हैं ॥ ६९ ॥

अथ गुडूच्यनुपानान्याह ।

घृतेन वातं सगुडा विबंधं पित्तं सिताढ्या मधुना कफं च ॥ वातास्रमुग्रं रुबुतैलमिश्रा शुण्ठ्यामवातं शमयेद्गुडूची ॥ ७० ॥ मद० निघं० ।

अर्थ-गुडूचीके अनुपानोंको वर्णन करते हैं। घृतके संग वादीको, गुडके संग विबंध ( मलके रुकने ) को, मिश्रीसंग पित्तको, मधु ( सहत ) संग कफको, एरंड तैलसंग वातरक्तको और सोंठसंग देनेसे आमवातको गुडूची ( गुर्च ) दूर करती है । ऐसा मदनपालनिघंटुमें लिखा है ॥ ७० ॥

अमृतास्वरसो हन्ति क्षौद्रयुक्तो हि कामलाम् ॥ शार्ङ्गधरेण चोक्तत्वाच्छ्लोकोयं रचितो मया ॥ ७१ ॥

अर्थ-गुडूचीका स्वरस ( गीली गुर्चसे निकाला हुआ रस ) सहतके साथ पिलानेसे कामला ( कमल-पीलिया ) का नाश कर देता है। ऐसा शार्ङ्गधरजीने स्वसंहिताके द्वितीयखंडमें किसी एक श्लोकके

चरणमें कहा है इसलिये यहां हमने श्लोक बनाकर लिखा है ॥ ७१ ॥

समधुश्छिन्नास्वरसो नानामेहनिवारणः ॥
वदन्ति भिषजः सर्वे शरदिन्दुनिभानने ॥ ७२ ॥
वै० जी० वि० ४ ।

अर्थ–लोलिंबराजजी अपनी स्त्रीसे कहते हैं कि हे शरदऋतुके चंद्रसमान मुखवाली स्त्री ! समस्त वैद्योंका तथा मेराभी यही कहना है कि गुडूचीका स्वरस सहतके संग सेवन करनेसे २० प्रकारके प्रमेह ( परमे ) नाश हो जाते हैं ॥ ७२ ॥

जीर्णज्वरं कफकृतं कणया समेतश्छिन्नोद्भवोद्भव-
कषायक एष हन्ति ॥ रामो दशास्यमिव राम इव
प्रलंबं रामो यथा समरमूर्द्धनि कार्तवीर्य्यम् ॥ ७३ ॥
वै० जी० वि० १ ।

अर्थ–और गुडूची ( गुरच ) का क्वाथ छोटी पीपलके चूर्णसंग लेनेसे कफकृत जीर्णज्वरको नाश करता है । जैसे रामचंद्रजीने रावण-का, बलदेवजीने प्रलंबासुरका और परशुरामजीने सहस्त्रार्जुनका नाश किया तैसे । यह सब वैद्यजीवनमें लिखा है ॥ ७३ ॥

अमृताक्काथकल्काभ्यां सक्षीरं विपचेद् घृतम् ॥
वातरक्तं जयत्याशु कुष्ठं जयति दुस्तरम् ॥ ७४ ॥
शार्ङ्ग० खं० २ अ० ९ ।

अर्थ–गुरचके क्वाथ या कल्कमें दूधसहित घृतको औटावे जब घृत ( घी ) मात्र शेष रह जावे उसे छान ले इसे गुडूची ( अमृता )-घृत कहते हैं । इसके सेवनसे वातरक्त और कुष्ठ दूर होते हैं । ऐसा शार्ङ्गधरमें लिखा है ॥ ७४ ॥

गुडूचीस्वरसः कर्षं क्षौद्रं स्यान्माषकोन्मितम् ॥
सैन्धवं क्षौद्रतुल्यं स्यात्सर्वमेकत्र मर्दयेत् ॥ ७५ ॥

अर्थ-गुरचके १ कर्ष ( १० मासे ) रसमें १ मासा सहत और १ मासा सेंधानोन मिलाकर खरल करे और इसको नेत्रमें लगावे तो ॥ ७५ ॥

अंजयेन्नयनं तेन पिल्लार्म्मतिमिरं जयेत् ॥
काचं कंडूं लिंगनाशं शुक्लकृष्णगतान् गदान् ॥७६॥
शार्ङ्ग० खं० ३ अ० १३ ।

अर्थ-पिल्लार्म्म रोग, तिमिर (दिनौंधी), काचबिंदु, खुजाल, लिंगनाश और नेत्रके श्वेत तथा काले विभागमें जो कुछ नेत्ररोग हो सो सब दूर होय । ऐसा शार्ङ्गधरके ३ खंडके १३ वें अध्यायमें लिखा है ॥ ७६ ॥

अथ नेत्ररोगे पुनर्नवानुपानानि ।

दुग्धेन कंडूं क्षौद्रेण नेत्रस्रावं च सर्पिषा ॥
पुष्पं तैलेन तिमिरं कांजिकेन निशांधताम् ॥
पुनर्नवा जयत्याशु भास्करस्तिमिरं यथा ॥ ७७ ॥
शार्ङ्ग० खं० ३ अ० १३ ।

अर्थ-अब नेत्ररोगपर पुनर्नवा ( साठी ) के अनुपानोंकोभी कहते हैं। पुनर्नवाको दूधमें घिसके नेत्रमें लगानेसे नेत्रोंकी खुजाल, सहतमें घिसकर लगानेसे नेत्रस्राव ( नेत्रोंसे जलका वहाव ), घीमें घिसकर लगानेसे फुल्ली, तेलमें लगानेसे तिमिर ( दिनौंधी ) और कांजीमें घिसकर लगानेसे नक्तांध ( रतौंधी ) ये सब नेत्रोंके रोग दूर होते हैं। यह शार्ङ्गधरके ३ रे खंडके १३ वें अध्यायमें लिखा है ॥ ७७ ॥

अथ त्रिफलानुपानानि ।

एका हरीतकी योज्या द्वौ च योज्यौ बिभीतकौ ॥
चत्वार्यामलकान्येव त्रिफलैषा प्रकीर्तिता ॥ ७८ ॥

अर्थ-अब त्रिफलाके अनुपान वर्णन करते हैं।१ हरीतकी (हर्ड), २ बहेडा, ४ आंवलेके योगको त्रिफला कहते हैं। अथवा १ भाग हर्ड, उससे दूना बहेडा, उससे दूना आंवला इनके योगको त्रिफला कहते हैं ॥ ७८ ॥

त्रिफला शोथमेहघ्नी नाशयेद्विषमज्वरान् ॥
दीपनी श्लेष्मपित्तघ्नी कुष्ठहंत्री रसायनी ॥
सर्पिर्मधुभ्यां संयुक्ता सैव नेत्रामयान् जयेत् ॥ ७९ ॥

शार्ङ्ग० खं० २ अ० २ ।

अर्थ-त्रिफलाके चूर्णको नित्य सेवन करनेसे शोथ, प्रमेह, विषमज्वर, कफ, पित्त, कुष्ठ इन सबका नाश होता है और अग्नि दीप्त होती है। तथा रोगरहित वह मनुष्य होकर अपनी पूर्णायुको प्राप्त होता है और उसका बल वीर्य नित्य वर्धितही हो जाता है। इसी त्रिफलाचूर्णको नित्य रात्रिसमय सहत और घीके संग यदि सेवन करे तो समस्त नेत्ररोग दूर हो जाते हैं ॥ ७९ ॥

फलत्रिकोद्भवं क्वाथं गोमूत्रेणैव पाययेत् ॥
वातश्लेष्मकृतं हन्ति शोथं वृषणसंभवम् ॥ ८० ॥

शार्ङ्ग० खं० २ अ० २ ।

अर्थ-और त्रिफलाके क्वाथको गोमूत्रके संग पीनेसे वादी तथा कफसे उत्पन्न भई पोतोंकी शोथ (सूजन) भी दूर हो जाती है॥८०॥

क्षौद्रेण त्रिफलाक्वाथः पीतो मेदहरः स्मृतः ॥
शीतीभूतं तथोष्णांबु मेदोह्रत् क्षौद्रसंयुतम् ॥८१॥

शार्ङ्ग० खं० २ अ० २ ।

अर्थ-त्रिफलाक्वाथ सहतसंग पिलानेसे मेदोवृद्धि दूर करता है और इसी प्रकार गरम पानीभी ठंडा होनेपर सहतसंग पीनेसे मेदका नाश करता है ॥ ८१ ॥

त्रिफलारग्वधक्काथः शर्कराक्षौद्रसंयुतः ॥
रक्तपित्तहरो दाहपित्तशूलनिवारणः ॥ ८२ ॥

शार्ङ्ग० खं० २ अ० २ ।

अर्थ-यदि त्रिफलाके क्वाथको बहेडेकी भीतरकी गुठली (मींगी, बीजा), शर्करा और सहतके संग पिलावे तो रक्तपित्त, दाह और पित्त-शूल ये सब दूर होंय । ये सब शार्ङ्गधरके २ रे खंडके २ अध्यायमें लिखा है ॥ ८२ ॥

त्रिफलाया रसः क्षौद्रयुक्तो जयति कामलाम् ॥
शार्ङ्गधरेण चोक्तत्वाच्छ्लोकोयं रचितो मया ॥ ८३ ॥

अर्थ-त्रिफलाके क्वाथको केवल सहतसंग पिलावे तो कामला दूर होय ऐसाभी शार्ङ्गधरजीने अपने ग्रंथमें कहीं लिखा है इसलिये हमने यहां श्लोक बनाकर लिखा है ॥ ८३ ॥

मृतायस्त्रिफलायष्टिचूर्णं मधुघृतान्वितम् ॥
दिनांते लेढि नित्यं स रतौ चटकवद्भवेत् ॥ ८४ ॥

इति ग्रंथांतरे ।

अर्थ-त्रिफलाचूर्ण सहत, घी और कांतिसार इन तीनोंके संग नित्य रात्रिको सेवन करे तो वह पुरुष मैथुन ( स्त्रीसंग ) जैसे चटक ( लाल ) मुनियांके संग करता है तैसे करे अर्थात् कभी थके नहीं ८४

इति श्रीपंडितज्ञारसरामविरचिते सुभाषानुवादविभूषितेऽनुपान-दर्पणेऽन्नौषध्यनुपानविवेककथने चतुर्थः प्रमोदः ॥ ४ ॥

अर्थ—तो असाध्यमेह, गुल्म, अर्श, तिमिर, कृमि, पांडु, गलग्रह, ग्रह, उन्माद और कुष्ठ ये सब रोग दूर होंय ॥ १४३ ॥

मुस्ता वत्सकपाठाग्निव्योषप्रतिविषा विषम् ॥
धातकी मोचनिर्यासं चूतास्थि ग्रहणीहरम् ॥१४४॥

अर्थ—नागरमोथा, कूडेकी छाल, पाठा, चित्रक, त्रिकटु, अतीस धायडेके फूल, मोचरस और आमकी गुठली इनके संग विष सेवनसे संग्रहणी दूर होय ॥ १४४ ॥

कृच्छ्रघ्ना विषपथ्याग्निदंतीद्राक्षाविषावृषाः ॥
शिलाजतु विषं त्र्यूषमुदावर्ताश्मरीहरम् ॥ १४५ ॥

अर्थ—हर्ड, चित्रक, दंती, दाख और अरूसेके संग विष सेवनसे मूत्रकृच्छ्रका तथा शिलाजीत, सोंठ, मिरच और पीपलसंग विष सेवनसे उदावर्त और पथरीका नाश होय ॥ १४५ ॥

गोमूत्रक्षारसिंधूत्थविषपाषाणभेदकम् ॥
वज्रवद्दारयत्येतदेकतः पीतमश्मरीम् ॥ १४६ ॥

अर्थ—सेंधानोन और पाषाणभेदयुक्त गोमूत्रसंग विषको पान करे तो जैसे वज्र पर्वतोंको विदीर्ण कर देता है तैसे विष पथरीको विदीर्ण कर देता है ॥ १४६ ॥

त्रिफला सर्जिकाक्षारैर्विषं गुल्मप्रभेदनम् ॥
पिप्पली पिप्पलीमूलं विषं शूलहरं परम् ॥ १४७ ॥

अर्थ—त्रिफला और सज्जीखारके संग गुल्मका, पीपल और पी-पलामूलके संग शूलका ॥ १४७ ॥

विषं द्रवंतीमधुकद्राक्षारास्नासठीकणाः ॥
विषवेल्लमिशिक्षीरं गुल्मप्लीहानिबर्हणम् ॥ १४८ ॥

अर्थ—द्रवंती, महुआ, दाख, रास्ना, कचूर, पीपल, वायविडंग, सोंफ और दूधसंग विष गोला और तापतिल्लीका नाश करता है॥१४८॥

प्लीहोदरघ्नं पयसा शताह्वा कृमिजिद्विषम् ॥
वायसीमूलक्काथेन पीतं कुष्ठहरं विषम् ॥ १४९ ॥

अर्थ-केवल दूधके साथ विष पीनेसे प्लीहोदर ( तापतिल्ली ) और सोंफसंग विष सेवनसे कृमिरोगका नाश होय । कंजेकी जडके क्काथसंग विष सेवनसे कुष्ठभी दूर होय ॥ १४९ ॥

पयसा राजवृक्षत्वक्त्रायंतीबाकुचीबलात् ॥
प्लीहघ्नं बाकुचायां च विषं क्काथेन कुष्ठजित् ॥१५०॥

अर्थ-अमलतासकी छाल, त्रायंती ( त्रायमाणा ), बावची, खरेटी इनके चूर्णसहित दूधसंग अथवा उक्तौषधियोंसे सिद्ध किये हुए दुग्धसंग विष पान करे तो तापतिल्ली दूर होय और उक्तौषधियोंके क्काथमें सुहागेके सहित विषपान करे तो कुष्ठभी दूर होय ॥ १५० ॥

अवल्गुजैलाकजयाविडक्षारद्वयं विषम् ॥
लेपः ससैन्धवः पिष्टो वारिणा कुष्ठनाशनः ॥ १५१ ॥

अर्थ-एलुवा, सज्जीखार, जवाखार और सेंधानोन इनके संग विष ( सिंगियाविष ) मिलाकर पानीसे खरल कर लेप करे तो कुष्ठ दूर होय ॥ १५१ ॥

एरंडतैलत्रिफलागोमूत्रं चित्रकं विषम् ॥
सर्पिषा सहितं पीतं वातार्तित्वमपोहति ॥ १५२ ॥

अर्थ-एरंडतैल, त्रिफला, गोमूत्र, चित्रक और विषको घृतके साथ पान करे तो वादीकी पीडाका नाश होय ॥ १५२ ॥

स्वरसं बीजपूरस्य वचा ब्राह्मीरसं घृतम् ॥
वंध्या पिबति सविषं सुपुत्रैः परिवार्य्यंते ॥ १५३ ॥

अर्थ-बिजोरेका अंगरस, वच, ब्राह्मीका रस, नवीन घृत इनमें विषको युक्त करके पान करनेसे वंध्या स्त्रीभी गर्भवती अवश्य होय१५३

वीरालांगलिकीदंतीविषपाषाणभेदकैः ॥
प्रयोज्य मूढगर्भाणां प्रलेपो गर्भमोचनः ॥ १५४ ॥

अर्थ-सफेद कनेर, कलियारी, दंती, वच्छनाग ( विष ) और पाषाणभेद इनका लेप करनेसे मूढ गर्भकाभी विमोचन ( निकल जाना ) होय ॥ १५४ ॥

देवदारु विषं सर्पिर्गोमूत्रं कंटकारिका ॥
वचा वाक्स्खलनं हन्ति बुद्धेश्च परिवर्द्धनम् ॥१५५॥

अर्थ-देवदारु, विष ( बच्छनाग ), कटियाली और वच इनके सेवनसे जिव्हाके समस्त रोग (विकार) दूर हों और बुद्धि बढे॥१५५॥

विषं सर्पिः सिता क्षौद्रं तिमिरापहमंजनम् ॥
विषं चैकमजाक्षीरकल्पितं घृतधूपितम् ॥ १५६ ॥

अर्थ-घी, मिश्री और सहतमें शुद्ध विषको घिसकर नेत्रमें लगावे तो तिमिर ( दिनौंधी ) दूर होय। यदि केवल विषकोही बकरीके दूधमें घिसकर नेत्रमें आंजे और घीकी धूनी दे तौभी तिमिर रोगका नाश होय ॥ १५६ ॥

विषं धात्रीफलरसैरसकृत्परिवारितम् ॥
अंजनं शंखसहितं प्रगाढं तिमिरं जयेत् ॥ १५७ ॥

अर्थ-तथा शंखकी नाभीसहित विषको आंवलेके रसकी बहुतसी भावना देकर अंजन प्रस्तुत ( तयार ) करे और उसे नेत्रमें लगावे तो घोर तिमिर रोगकाभी नाश होय ॥ १५७ ॥

विषमिन्द्रायुधं स्तन्ये घृष्टं काचभिदंजनम् ॥
बीजपूररसैर्घृष्टं विषं तद्वत्सितान्वितम् ॥ १५८ ॥

अर्थ-हीरा और विषको स्त्रीके दूधमें घिसकर नेत्रमें लगानेसे अथवा बिजोरेके रसमें मिश्री डालकर उसमें विषको घिसकर नेत्रमें लगानेसे ॥ १५८ ॥

विषं मागधिका द्वे च निशे काचघ्नमंजनम् ॥
शुक्लार्मे च विषं कृष्णायुक्तं गोमूत्रभावितम् ॥१५९॥

अर्थ-तथा छोटी पीपल, दोनों हलदी और विष इनका अंजन बनाकर नेत्रमें लगानेसे नेत्रमें जो काचरोग होता है वह दूर होय और छोटी पीपलके संग विषको गोमूत्रसे घिसकर नेत्रमें लगानेसे शु-क्लार्म्म नामक नेत्ररोग दूर होय ॥ १५९ ॥

भल्लातकाग्निशम्याकविषैर्वा मूत्रपेषितैः ॥
लेपो विचर्चिकादद्रुरसिकाकिटिभापहा ॥ १६० ॥

अर्थ-भिलावे, चित्रक, अमलतासके गूदेके संग विषको पीसकर लेप करनेसे विचर्चिका ( व्योंची ), दाद, रसिका और कीटभकुष्ठ ये सब दूर होंय ॥ १६० ॥

स्वर्जिकाक्षारसिंधूत्थशुक्तशुक्तं वरं विषम् ॥
कर्णयोः पूरणं तीव्रकर्णशूलनिबर्हणम् ॥ १६१ ॥

अर्थ-सज्जी, सेंधानोन, शिरका और कांजी इनके संग वच्छनाग विषको खरल करके कानोंमें डाले तो कर्णशूलका नाश होय॥१६१॥

प्रपौंडरीकमंजिष्ठाविषतिंदुसमुद्भवैः ॥
निहन्ति साधितं तैलं गंडूषेण मुखामयान् ॥ १६२ ॥

अर्थ-कमलपुष्प, मजीठ, विष और कुचला इनसे तैलको बना-कर उसके कुल्ला करे तो समस्त मुखरोग दूर होंय ॥ १६२ ॥

शालाखदिरकंकोलजातीकर्पूरचंदनैः ॥
बोलाब्दवालैर्द्विगुणविषैः सारांबुपेषितैः ॥ १६३ ॥

अर्थ-अथवा शालकी छाल, कत्था, कंकोल, जायफल, भीमसेनी कपूर, चंदन, बोल, नागरमोथा और सुगंधवाला ये सब औषधि समान लेवे और उक्त औषधियोंसे दूना विष लेकर सबको खैरसारके पानी ॥ १६३ ॥

**समूत्रवटिकाः कृता धृता घ्नन्ति मुखामयान् ॥**
**कटुतैलं विषं नस्यं पलिकारूंषिकापहम् ॥ १६४ ॥**

अर्थ–और गोमूत्रसे खरल करके गोलियां बनावे उस गोलीको मुखमें रक्खे तो मुखके समस्त रोग दूर होंय। कडवे तेलमें विष मिलाकर नास लेवे तो नासिकाके पलिका और अरूंषिकादि समस्त रोग दूर होंय ॥ १६४ ॥

**गुंजाटंकणशिग्रुमूलरजनीसम्पाकभल्लातक-**
**स्नुह्यर्काग्निकरंजसैंधववचाकुष्ठाभयालाङ्गली-॥**
**वर्षाभूषडभूशिरीषवरणव्योषाश्वमारो विषं**
**गोमूत्रं शमयेद्विलुप्तमपचीं ग्रंथ्यर्बुदे श्लीपदान्॥१६५॥**

इति ग्रन्थान्तरे ।

अर्थ–चिरमी ( गुमची गुंजा ), सुहागा, सहजने ( मुंगने ) की जड, हलदी, अमलतास, भिलावा, थूहर, आक,चित्रक, कंजा, सेंधा-नोन, वच, कूठ, हर्ड, कलियारी, वर्षाभू ( पुनर्नवा, सांठी ), षडभू, शिरसकी छाल, सोंठ, मिरच, पीपल,कनेर और वच्छनाग (विष) इन सबको गोमूत्रमें पीसकर लगानेसे इंद्रलुप्त (मस्तकके बालोंके न आने मयीरोग ), अपचीरोग, गांठ, अर्बुद और श्लीपद ( हाथीपावभी जिसे कहते हैं) ये सब रोगोंका नाश होय।ये विषके अनुपानके समस्त श्लोक हमने ग्रंथान्तरसे लिखे हैं इनमें कहीं पाठ अशुद्ध जान पडे तो विद्वान् मुझे दोष न देवे मैंने जैसा पाठ था वैसाही लिख दिया है ॥१६५॥

इति श्रीमत्पण्डितज्ञारसरामविरचिते सुभाषानुवादविभूषितेऽनुपानदर्पणे मृत्युंजयादिरसधातूपधातुपारदादिरसोपरसानां विषस्य चानुपानविवेककथने पञ्चमः प्रमोदः ॥ ५ ॥

---

१ विषके अनुपानमें जहां २ विष लिखा है वहां २ शुद्ध किया हुआ विष लेना चाहिये ।

# अथ षष्ठः प्रमोदः ।

अथातो योगराजगुग्गुलुनारायणचूर्णमृत्युंजयादिरसानां निर्म्माणविवेकं व्याख्यास्यामः ।

## अथ योगराजगुग्गुलुविधिः ।

नागरं पिप्पली चव्यं पिप्पलीमूलचित्रकैः ॥
भ्रष्टं हिंग्वजमोदं च सर्षपा जीरकद्वयम् ॥१॥

अर्थ-अब इसके आगे योगराज गुग्गुल, नारायणचूर्ण और मृत्युंजय आदि रसोंको बनानेके विवेकको वर्णन करेंगे। प्रथम योगराज गुग्गुल बनानेकी विधि वर्णन करते हैं । १ सोंठ, २ छोटी पीपल, ३ चव्य (चव), ४ पीपलामूल, ५ चित्रक, ६ अग्निपक्व हींग, ७अजमोदा, ८ सर्षप ( शिरस सरसों ), ९ सपेद जीरा, १० काला जीरा ॥ १ ॥

रेणुकेंद्रयवाः पाठा विडंगं गजपिप्पली ॥
कटुकातिविषा भार्ङ्गी वचा मूर्वेति भागतः ॥ २ ॥

अर्थ-११ रेणुकबीज, १२ इंद्रजव, १३ पाठा, १४ वायविडंग, १५ गजपीपल, १६ कुटकी, १७ अतीस, १८ भार्ङ्गी, १९ वच और २० मूर्वा ॥ २ ॥

प्रत्येकं शाणिकानि स्युर्द्रव्याणीमानि विंशतिः ॥
द्रव्येभ्यः सकलेभ्यश्च त्रिफला द्विगुणा भवेत् ॥ ३ ॥

अर्थ-यह २० प्रत्येक औषध शाण २ ( ४ मासे ) प्रमाण लेवे और इन उक्त सर्व औषधियोंसे दूना त्रिफला लेकर ॥ ३ ॥

एभिश्चूर्णीकृतैः सर्वैः समो देयस्तु गुग्गुलुः ॥
वंगं रौप्यं च नागं च लोहसारं तथाभ्रकम् ॥ ४ ॥

अर्थ–सबका चूर्ण करे पश्चात् इस चूर्णके समान ( बराबर ) शुद्ध गुग्गुलु[1] और वंगभस्म, रौप्यभस्म, नागभस्म, लोहभस्म, अभ्रकभस्म ॥ ४ ॥

**मंडूरं रससिंदूरं प्रत्येकं पलसंमितम् ॥**
**गुडपाकसमं कृत्वा इमं दद्याद्यथोचितम् ॥ ५ ॥**

अर्थ–मंडूर और रससिंदूर ये सात भस्म पल २ प्रमाण लेवे पश्चात् गुडकी चासनीकी तुल्य शुद्ध गुग्गुलकी चासनी बनाकर पूर्वोक्त औषधियोंका चूर्ण और उक्त भस्मोंको उस शुद्ध गुग्गुलकी चासनीमें मिलावे ॥ ५ ॥

**एकपिंडं ततः कृत्वा धारयेद्घृतभाजने ॥**
**गुटिकाः शाणमात्रास्तु कृत्वा ग्राह्या यथोचिताः ॥६॥**

अर्थ–जब वे सब मिलकर एक पिंड बन जावे तब उसकी चार मासेकी गोलियां बनाकर उन्हें घीकी मटकीमें रक्खे और उसमेंसे जितनी रोगीको सेवन करना योग्य समझे ग्रहण करे ॥ ६ ॥

**गुग्गुलुर्योगराजोयं त्रिदोषघ्नो रसायनम् ॥**
**मैथुनाहारपानानां त्यागो नैवात्र विद्यते ॥ ७ ॥**

अर्थ–इसे योगराज गुग्गुलु कहते हैं । यह त्रिदोषको दूर करनेवाला और रसायन ( आयु, बल, बुद्धि, वृद्धिकारक और रोग-संहारक ) है इसके सेवनसे मैथुन ( स्त्रीसंग ) तथा किसी पदार्थके खाने पीनेकी मनाई नहीं है ॥ ७ ॥

**सर्वान्वातामयान् कुष्ठानर्शांसि ग्रहणीगदम् ॥**
**प्रमेहं वातरक्तं च नाभिशूलं भगंदरम् ॥ ८ ॥**

अर्थ–यह योगराज गुग्गुल समस्त वातजन्य रोगोंका, कुष्ठोंका,

---

१ दशमूलके अथवा त्रिफलाके काथमें गुग्गुलको शुद्ध करके लेना चाहिये ।

अर्शी ( मूलव्याधि ) मसोंका, ग्रहणी ( संग्रहणी ), प्रमेह, वातरक्त, नाभिशूल, भगंदर ॥ ८ ॥

**उदावर्तं क्षयं गुल्ममपस्मारमुरोग्रहम् ॥**
**मंदाग्निश्वासकासांश्च नाशयेदरुचिं तथा ॥ ९ ॥**

अर्थ-उदावर्त्त, क्षयी, गुल्म, अपस्मार ( मृगी ), उरग्रह, मंदाग्नि, श्वास, कास और अरुचि इतने रोगोंका नाश करता है॥ ९ ॥

**रेतोदोषहरः पुंसां रजोदोषहरः स्त्रियाम् ॥**
**पुंसामपत्यजनको वंध्यानां गर्भदस्तथा ॥ १० ॥**

शार्ङ्ग० खं० २ अ० ७ ।

अर्थ-यह योगराजगुग्गुल पुरुषोंके धातुविकार, स्त्रियोंके रजोधर्म्मसंबंधी विकारोंको हरण करनेवाला तथा पुरुषोंकी धातुवृद्धिद्वारा पुरुषोंको पुत्र और वंध्या स्त्रियोंकोभी गर्भ देनेवाला है। ऐसा शार्ङ्गधरके दूसरे खंडके ७ वें अध्यायमें लिखा है ॥ १० ॥

## अथ नारायणचूर्णविधिः ।

**चित्रकस्त्रिफला व्योषं जीरकं हबुषा वचा ॥**
**यवानी पिप्पलीमूलं शतपुष्पाजगंधिका ॥ ११ ॥**

अर्थ-अब नारायणचूर्ण बनानेकी विधि वर्णन करते हैं। १ चित्रक, २ त्रिफला ३ सोंठ, ४ मिरच, ५ पीपल, ६ जीरा, ७ हबुषा ( हाऊवेर[1] ), ८ वच, ९ अजवायन, १० पीपलामूल, ११ बडीशोफ, १२ वनतुलसी ॥ ११ ॥

**अजमोदा शठी धान्यं विडंगं स्थूलजीरकम् ॥**
**हेमाह्वा पौष्करं मूलं क्षारौ लवणपञ्चकम् ॥ १२ ॥**

---

१ इसे महाराष्ट्र भाषामें शेरणीभी कहते हैं यह नदीके समीप होती है प्रसिद्ध है ।

अर्थ-१३ अजमोदा, १४ कचूर, १५ धनिया, १६ वायविडंग, १७ कलौंजी, १८ चोख, १९ पोहकरमूल, २० सज्जीखार, २१ जवाखार, २२ पांचों नोन ॥ १२ ॥

**कुष्ठं चेति समांशानि विशाला स्याद्द्विभागिका ॥**
**त्रिवृत्त्रिभागा विज्ञेया दन्त्या भागत्रयं भवेत् ॥ १३ ॥**

अर्थ-और कूठ यह २७ औषध बराबर एक एक भाग तथा इंद्रायन दो भाग, निसोथ तीन भाग तथा दंती ( दात्यूणी ) भी तीन भाग ॥ १३ ॥

**चतुर्भागा सातला स्यात्सर्वाण्येकत्र चूर्णयेत् ॥**
**पाचनस्नेहनाद्यैश्च स्निग्धकोष्ठस्य रोगिणः ॥ १४ ॥**

अर्थ-चार भाग पीले थूहर[1]की जड अथवा पीला थूहरही लेवे पश्चात् उक्त समस्त औषधोंको कूटके महीन कपडछान चूर्ण बनावे और रोगीको प्रथम पाचन नंतर स्निग्ध ( घृत ) पान विधिपूर्वक कराके जब उसका कोठा सचिक्कण हो जावे तब ॥ १४ ॥

**दद्याच्चूर्णं विरेकाय सर्वशूलप्रणाशनम् ॥**
**हृद्रोगे पाण्डुरोगे च कासे श्वासे भगंदरे ॥ १५ ॥**
**मंदाग्नौ च ज्वरे कुष्ठे ग्रहण्यां च गलग्रहे ॥ १६ ॥**

शार्ङ्ग० खं० २ अ० ६ ।

अर्थ-यह नारायणचूर्ण रेचन ( दस्त ) होनेके लिये देवे इससे सब प्रकारके शूल, हृद्रोग, पांडु, कास, श्वास, भगंदर, मंदाग्नि, ज्वर, कुष्ठ, संग्रहणी और गलग्रह आदि समस्त रोग दूर होते हैं । ऐसा शार्ङ्गधरके दूसरे खंडके ६ वें अध्यायमें लिखा है ॥ १५ ॥ १६ ॥

---

१ थूहर कई प्रकारका होता है पर नारायणचूर्णमें काडीदार थूहर जिसकी शाखें काडीरूपसेही निकलती हैं कुछ पीलापनभी रहता है उसे लेना चाहिये ।

## अथ मृत्युंजयरसनिर्माणविधिः ।

**अव्यक्तः सिद्धिदः शुद्धो रोगघ्नः कीर्तिवर्द्धनः ॥**
**यशप्रदः शिवः साक्षान्मृत्युञ्जयरसः स्मृतः ॥ १७ ॥**

अर्थ-अब मृत्युंजयरस बनानेकी विधि वर्णन करते हैं । अतुलित प्रभावयुक्त, सिद्धिप्रद, निर्मल ( दोषरहित ), रोगनाशक, कीर्तिविकाशक, यश देनेहारा, कल्याणस्वरूप यह मृत्युंजयरस है ॥ १७ ॥

**विषस्यैकं तथा भागं मरिचं पिप्पली कणा ॥**
**गन्धकस्य तथा भागं भागं स्याट्टङ्कणस्य च ॥ १८ ॥**

अर्थ-इसको इस प्रकारसे बनाना चाहिये । १ भाग विष (वच्छनाग ), १ भाग काली मिरच, १ भाग छोटी पीपल, १ भाग शुद्ध आंवलासार गंधक, १ भाग शुद्ध सुहागा ॥ १८ ॥

**सर्वत्र समभागं स्याद्धिङ्गुलं तु द्विभागिकम् ॥**
**चूर्णयेत्खल्वमध्ये तु मुद्गमानां वटीं चरेत् ॥ १९ ॥**

अर्थ-ये सब समान लेवे और हिंगुल २ भाग लेवे पश्चात् सबको नागरवेलीके पानके रसमें अथवा अदरखके रसमें खरल करके मूंगके बराबर गोलियां बनावे ॥ १९ ॥

**जंबीरस्य रसेनात्र कार्यं हिङ्गुलशोधनम् ॥**
**रसश्चेत्समभागः स्याद्धिङ्गुलं नेष्यते तदा ॥ २० ॥**

अर्थ-इस मृत्युंजय रसमें जो हिंगुल डाले सो जंबीरीके रससे शुद्ध करके डाले यदि सब औषधियोंके समान १ भाग शुद्ध पाराही डाले तो फिर हिंगुलको न डाले ॥ २० ॥

**गोमूत्रशोधितं चात्र विषं सौरविशोधितम् ॥**
**मृत्युरूपं ज्वरं हन्ति मृत्युञ्जयरसः स्मृतः ॥ २१ ॥**

अर्थ-और विष ( वच्छनाग ) जो इसमें डाले उसेभी गोमूत्रमें

शुद्ध करके धूपमें सुखाकर डालना चाहिये इस प्रकारसे बनाया हुआ यह रस मृत्युरूप ज्वरका नाश करता है, इसीलिये इसको मृत्युंजय रस कहते हैं ॥ २१ ॥

**तीव्रज्वरे महाघोरे पुरुषे यौवनान्विते ॥**
**पूर्णमात्रा प्रदातव्या पूर्णं वटिचतुष्टयम् ॥ २२ ॥**

अर्थ—यदि रोगी तरुण ( जवान ) अवस्थावाला हो तो उसे अतिवेगयुक्त भयंकर ज्वरमेंभी इस मृत्युंजयरसकी पूर्ण मात्रा देनी चाहिये, चार गोलीकी पूर्ण ( पूरी ) मात्रा इस रसकी होती है॥२२॥

**स्त्रीबालवृद्धक्षीणेषु ह्यर्द्धमात्रा प्रकीर्तिता ॥**
**अतिवृद्धे च क्षीणे च शिशौ चाल्पवयस्यपि ॥ २३॥**

अर्थ—स्त्री, बालक, वृद्ध और क्षीण रोगीको अर्द्धमात्रा (२ गोली) तथा अत्यंत बूढेको, अत्यंत क्षीणको और अति छोटे बालकको ॥२३॥

**तूर्य्यमात्रा प्रदातव्या व्यवस्था सारनिश्चिता ॥**
**नवज्वरे महाघोरे यामैका नाशयेद्ध्रुवम् ॥ २४ ॥**

अर्थ—उक्त रसकी चौथाई मात्रा ( १ गोली ) ही देना चाहिये क्योंकि मात्राका नियम अवस्थानुसारही निश्चय किया गया है नवीन[1] महाभयंकर ज्वरको १ प्रहरमें ॥ २४ ॥

**मध्यज्वरे तथाजीर्णे त्रिरात्रान्नाशयेद्ध्रुवम् ॥**
**सप्ताहात्सन्निपातोत्थं ज्वरं जीर्णकसंज्ञकम् ॥ २५ ॥**

इति रसेन्द्रसारसंग्रहे ज्वराधिकारे ॥

अर्थ—मध्यज्वरको, अजीर्णज्वरको, पुराणज्वरको ३ दिनमें, सन्निपातको और जीर्णज्वरको ७ दिनमें यह मृत्युंजयरस दूर करता है ॥ ऐसा रसेन्द्रसारसंग्रहके ज्वराधिकारमें लिखा है ॥ २५ ॥

---

१ ज्वर आगमनसे ७ दिनतक तरुण ( नवीन ) ज्वर, ७ दिनसे १४ दिनतक मध्यज्वर, १४ दिनसे २१ दिनतक पुराणज्वर और २१ दिन पश्चात् जीर्णज्वर कहाता है।

अथ वसन्तकुसुमाकररसनिर्माणविधिः ।

प्रवालरसमौक्तिकां वरमिदं चतुर्भागभाक्
पृथक् पृथगथ स्मृते रजतहेमनी द्व्यंशके ॥
अथो भुजगरंगकं त्रिलवकं विमर्द्याखिलं
शुभेहनि विभावयेद्भिषगिदं धिया सर्वशः ॥ २६ ॥

अर्थ-अब वसंतकुसुमाकर रस बनानेकी विधि वर्णन करते हैं। मूंगा, चंद्रोदय, मोती और अभ्रकभस्म ये प्रत्येक ४ भाग ( ४ तोले ) लेवे, रूपेकी और सोनेकी भस्म २ भाग ( दो दो तोला ) पृथक् २ लेवे, लोहभस्म ( सार ) सीसेकी भस्म और वंगभस्म ( रांगेकी भस्म ) ये प्रत्येक तीन भाग ( तीन तीन तोले ) लेवे पश्चात् शुभ दिन सुमुहूर्तमें वैद्य इन सबको एकत्र खरल ( खलबत्ते ) में डाले और निम्नलिखित रसोंकी यथायोग्य अपनी बुद्धिसे विचारके भावना देवे ॥ २६ ॥

द्रवैर्वृषनिशेक्षुजैः कमलमालतीपुष्पजैः
पयःकदलिकंदजैर्मलयजैणनाभ्युद्भवैः ॥
वसन्तकुसुमाकरो रसपतिर्द्धिवल्लोन्मितः
समस्तगदहृद्भवेत्किल निजानुपानैरयम् ॥ २७ ॥

इति ग्रंथान्तरे ।

अर्थ-अडूसा, हलदी, सांठेका रस, कमलपुष्प, मालतीपुष्प, गोदुग्ध, केलाकंद, चंदन और कस्तूरी इनमेंसे जिसका रस निकल सके उनके रसकी और जिनका रस न निकल सके उनकी वैसेही भावना देनेसे सब रसोंका राजा यह वसंतकुसुमाकर रस बनता है। इसकी ४ रत्तीकी मात्रा न्यारे २ अनुपानोंके साथ देनेसे समस्त रोगोंका नाश होय। ऐसा ग्रंथांतरमें लिखा है ॥ २७ ॥

## अथ लोकनाथरसनिर्म्माणविधिः ।

**शुद्धो बुभुक्षितः सूतो भागद्वयमितो भवेत् ॥**
**तथा गंधस्य भागौ द्वौ कुर्य्यात्कज्जलिकां तयोः॥२८॥**

अर्थ–अब लोकनाथरसके बनानेकी विधि वर्णन करते हैं । २ भाग शुद्ध बुभुक्षित[1] पारा और १ भाग शुद्ध गंधक इन दोनोंको मिलाकर खरल करे जब इनकी कज्जली बन जावे तब ॥ २८ ॥

**सूताच्चतुर्गुणेष्वेव कपर्देषु विनिक्षिपेत् ॥**
**भागैकं टंकणं दत्त्वा गोक्षीरेण विमर्दयेत् ॥ २९ ॥**

अर्थ–पारेसे चौगुनी कौडियोंमें वह कज्जली भरे । पश्चात् १ भाग सुहागा लेकर उसे गोदुग्धमें खरल करके उन कौडियोंके मुखपर लगावे कि जिससे उन कौडियोंमें भरी हुई कज्जली बाहर न निकलने पावे ॥ २९ ॥

**तथा शंखस्य खण्डानां भागानष्टौ प्रकल्पयेत् ॥**
**क्षिपेत्सर्वं पुटस्यान्तश्चूर्णं लिप्तशरावयोः ॥ ३० ॥**

अर्थ–पीछे ८ भाग शंखके टुकडे लेके मट्टीके दो सिकोरे ( शराई ) जिसको भीतर चूनेसे पोत ( लीप ) देवे और इन चूनेसे पोते हुए दो सिकोरेमेंसे एक सिकोरेमें शंखके ८ भाग टुकडोंमेंसे आधे टुकडे भरकर उनपर वे कज्जली भरी हुई कौडियां रखकर उनके ऊपर जो शंखके शेष ( आधे ) टुकडे रहे सो रक्खे पश्चात् दूसरा सिकोरा ऊपरसे ढांककर इस संपुट[2]के मुखको कपडमिट्टीसे दृढ बंद करके ॥ ३० ॥

---

१ बुभुक्षित पारा उसे कहते हैं जो गन्धक आदिके जारणसे सुवर्णादि धातुओंके योग्य होय ।

२ संपुट उसे कहते हैं जो दोनों शराई ( सिकोरे ) के मुख मिलाकर बन्द किया जावे पर सम्पुट करनेके मिट्टीके सिकोरोंको प्रथमही पाषाणपर युक्तिसे घिस लेने चाहिये कि जिससे दोनों सिकोरोंकी कोरें ऐसी मिल जावें कि जिसमें सन्धिमात्र न रहे

**गर्तें हस्तोन्मिते धृत्वा पचेद्गजपुटेन च ॥**
**स्वांगशीतं समुद्धृत्य पिष्ट्वा तत्सर्वमेकतः ॥ ३१ ॥**

अर्थ–१ हाथ गहरे खड्डे ( गड्डे ) में उस संपुटको रखकर गज[1]-पुटसे पकावे ( आंच देवे ) जब पूर्ण शीतल हो जावे तब उस संपुटमेंसे शंखके टुकडोंकी और कज्जली भरी हुई कौडियोंकी समस्त भस्म एकत्र कर खलमें महीन पीस लेवे ॥ ३१ ॥

**षड्गुंजासंमितं चूर्णमेकोनत्रिंशदूषणैः ॥**
**घृतेन वातजे दद्यान्नवनीतेन पित्तजे ॥ ३२ ॥**

अर्थ–इसे लोकनाथरस कहते हैं। इसमेंसे ६ रत्तीमात्र लेकर उसमें २९ काली मिरचके चूर्णको मिलाकर घीके साथ वातरोगमें, नवनीत ( माखन ) के संग पित्तरोगमें ॥ ३२ ॥

**क्षौद्रेण श्लेष्मजे दद्यादतिसारे क्षये तथा ॥**
**अरुचौ ग्रहणीरोगे कार्श्ये मंदानले तथा ॥ ३३ ॥**

अर्थ–और सहतसंग कफरोगमें देवे तौ उक्त समस्त रोग दूर होंय तथा अतिसार, क्षयी, अरुची, संग्रहणी, कृशता, मन्दाग्नि॥३३॥

**कासे श्वासेषु गुल्मेषु लोकनाथो रसो हितः ॥**
**तस्योपरि घृतान्नं च भुंजीत कवलत्रयम् ॥ ३४ ॥**

अर्थ–कास, श्वास और गुल्म इन रोगोंपरभी यह लोकनाथरस अति हितप्रद है इसको सेवन करनेवाला निम्नलिखित प्रकारसे आहार विहारका वर्ताव रक्खे उक्त रसकी पूर्वोक्त मात्रा लेकर उसपर घृतसहित चावलोंके ३ ग्रास ( कवल ) लेवे ॥ ३४ ॥

---

[1] तीस अंगुल ( सवाहात ) का एक शंकु बनाके उसीके प्रमाण लंबा चौडा गहरा गड्डा खोदके उसमें ५०० गोबरी ( आलने, कंडा ) भरके उन कंडोंपर संपुट रखके ऊपरसे पुनः ५०० पूर्वोक्त गोबरी धरके आंच देवे इसे गजपुट कहते हैं ।

मंचे क्षणैकमुत्तानः शयीतानुपधानके ॥
अनम्लमन्नं सघृतं भुंजीत मधुरं दधि ॥ ३५ ॥

अर्थ–पश्चात् मंच ( खाट ) पर तकिया गद्दी ( बिछौने ) विनही एक क्षणभर सीधा सोवे, खटाईको छोडकर घृतसहित मिष्टान्न और मीठे दहीकोभी खावे ॥ ३५ ॥

प्रायेण जांगलं मांसं प्रदेयं घृतपाचितम् ॥
सुदुग्धभक्तं दद्याच्च जातेग्नौ सांध्यभोजने ॥ ३६ ॥

अर्थ–मांसाहारी ( मांस खानेवाले मनुष्य ) को जांगल ( हरिण आदि जांगलदेशज जीवोंका ) घृतपक्व मांसभी खानेको देवे और सायंकालके भोजनके समय यदि जठराग्नि प्रदीप्त होवे ( अच्छी भूख लगे ) तौ दूध चावल खानेको देवे ॥ ३६ ॥

सघृतान्मुद्गवटकान् व्यंजनेष्वेव चारयेत् ॥
तिलामलककल्केन स्नापयेत्सर्पिषाथ वा ॥ ३७ ॥

अर्थ–और मुख अच्छा होने तथा रुचि बढानेके लिये व्यञ्जनोंकी जगह घीमें बनाये ( तले ) हुए मूंगके वडे खावे, तिल और आंवलोंको पीसकर उनके कल्क ( पीठी ) से अथवा घृतसे ॥ ३७ ॥

अभ्यंजयेत्सर्पिषा च स्नानं कोष्णोदकेन च ॥
क्वचित्तैलं न गृह्णीयान्न बिल्वं कारवेल्लकम् ॥ ३८ ॥

अर्थ–शरीरको मलकर कुछ ( अल्प ) गरम पानीसे स्नान करे और तेलको खाने पीने शरीरके लगानेमें कदापि स्वीकार न करे । बील, करेले ॥ ३८ ॥

वार्ताकं शफरीं चिंचां त्यजेद्व्यायाममैथुनम् ॥
मद्यं संधानकं हिंगु शुण्ठीं माषान् मसूरकान् ॥ ३९ ॥

अर्थ–कटेलीका फल, मछली, अमली, व्यायाम ( कसरत ),

स्त्रीसंग ( मैथुन ), मदिरा, संधान[1], हींग, सोंठ, उडद, मसूर ॥३९॥

कूष्मांडं राजिकां कांपकांजिकं चैव वर्जयेत् ॥
त्यजेदयुक्तनिद्रां च कांस्यपात्रे च भोजनम् ॥ ४० ॥

अर्थ–कोहला, राई, कांजी, अयोग्य नींद, कांसेके पात्रमें भोजन ॥ ४० ॥

ककारादियुतं सर्वं त्यजेच्छाकफलादिकम् ॥
पथ्योऽयं लोकनाथस्तु शुभनक्षत्रवासरे ॥ ४१ ॥

अर्थ–जिनके नामके आदिमें ककार हो ऐसे शाक और फल इन सबको त्यागन कर ( छोड ) दे। यह लोकनाथरसका पथ्य वर्णन किया है। प्रथमारंभके दिन शुभ नक्षत्र, शुभ वार ॥ ४१ ॥

पूर्णातिथौ शुक्लपक्षे जाते चंद्रबले तथा ॥
पूजयित्वा लोकनाथं कुमारीं भोजयेत्ततः ॥ ४२ ॥

अर्थ–पंचमी, दशमी, पूनो तिथि, शुक्ल पक्ष और चन्द्रबलयुक्त उत्तम मुहूर्तमें लोकनाथ ( परमेश्वर और उक्त रस ) का पूजन करके कन्याको भोजन कराके ॥ ४२ ॥

दानं दद्याद्द्विघटिकामध्ये ग्राह्यो रसोत्तमः ॥
रसात्संजायते तापस्तदा शर्करया युतम् ॥ ४३ ॥

अर्थ–और स्वशक्त्यनुसार दो घडी पर्यन्त अन्न, जल, वस्त्र, पुस्तक, छत्र, भूमि, गौ आदिका दान देकर इस लोकनाथरसको ग्रहण करना चाहिये। यदि इसके ग्रहण करने पर कुछ उष्णता ( ताप ) हो तो मिश्री ॥ ४३ ॥

सत्वं गुडूच्या गृह्णीयाद्वंशरोचनया युतम् ॥
खर्जूरं दाडिमं द्राक्षामिक्षुखंडानि चारयेत् ॥ ४४ ॥

शार्ङ्ग० खं० २ अ० १२ ।

[1] संधान यहभी एक मदिरा ( मद्य, दारू, सराफ, बरांडी ) काही भेद है ।

अर्थ–गुरच ( गिलोय ) सत्व और वंशलोचन इनको मिलाके ग्रहण करे अथवा खजूर, अनार, दाख और इक्षु ( सांठे ) के टुकडे इन्होंमेंसे किसीकोभी भक्षण करे। ऐसा शार्ङ्गधरके दूसरे खंडके बारहवें अध्यायमें लिखा है ॥ ४४ ॥

अथ स्वर्णमालिनीवसन्तरसनिर्माणविधिः ।

स्वर्णं मुक्ता दरदमरिचं भागवृद्ध्या गृहीतं
खर्पर्य्यष्टौ प्रथममखिलं मर्दयेन्मृत्क्षयेण ॥
यावत्स्नेहो व्रजति विलयं मर्दने दीयतेऽसौ
गुंजाद्वंद्वं मधुमगधया मालिनीप्राग्वसंतः ॥ ४५ ॥
इति ग्रंथान्तरे ।

अर्थ–अब स्वर्णमालिनीवसन्तरसके बनानेकी विधि वर्णन करते हैं। १ मासा सुवर्णपत्र ( सोनेका वर्क ), २ मासे अनवीधे मोती, ३ मासे सिंगरफ, ४ मासे काली मिरच, ८ मासे शुद्ध खपरिया इन सबको एक प्रहर पर्यंत मक्खनसे खरल करे ( खलबत्तेमें घोटे ) पश्चात् महीन छिलकेवाले ( कागजी ) निंबूके रससे जबतक मक्खनकी चिकनाई दूर न हो तबतक घोटे चिकनाई दूर होनेपर इसकी टिकिया बना लेवे इसे स्वर्णमालिनीवसन्तरस कहते हैं इस रसको पीपल और सहतसंग २ रत्तीमात्र देवे तौ सर्व रोग दूर होंय ॥ ४५ ॥

अथ बृहन्मालिनीवसन्तरसनिर्म्माणविधिः ।

वैक्रांतमभ्रं रविताप्यरौप्यं गंधः प्रवालं रसभस्म लोहम् ॥ सटंकणं शंबुकभस्म सर्वं समस्तमेतच्च वरीरजन्योः ॥ ४६ ॥

अर्थ–अब बृहन्मालिनीवसन्त रसके बनानेकी विधि लिखते हैं। वैक्रांत ( रत्नविशेष ) की भस्म, अभ्रकभस्म, ताम्रभस्म, चांदीभस्म शुद्ध गन्धक, मूंगाभस्म, चन्द्रोदय, लोहभस्म, सुहागा, शंखभस्म

ये सब बराबर लेके खरल करे पश्चात् शतावरीके रसकी और हल-
दीके रसकी ॥ ४६ ॥

द्रवैर्विमर्द्य मुनिसंख्यया च कस्तूरिकाशीतकरेण
पश्चात् ॥ तदा बृहत्पूर्वकमालिनीप्राक् वसंत-
नामा रसदो रसोयम् ॥ ४७ ॥ इति ग्रंथान्तरे ।

अर्थ-सात २ भावना दे। तदनन्तर कस्तूरी और कपूरकी यथा-
योग्य भावना देकर अनुमानसे टिकिया बांध लेवे इसे बृहन्मालनी
वसन्तरस कहते हैं यह रस हर्ष देनेवाला और समस्त रोगोंको दूर
करनेवाला है। ऐसा ग्रन्थांतरमें लिखा है ॥ ४७ ॥

अथ पाशुपतरसनिर्माणविधिः ।

शुद्धं सूतं द्विधा गंधं त्रिभागं तीक्ष्णभस्मकम् ॥
त्रिभिः समं विषं देयं चित्रकक्काथभावितम् ॥ ४८ ॥

अर्थ-अब पाशुपतरसके बनानेकी विधि वर्णन करते हैं। १ भाग
शुद्ध पारा, २ भाग शुद्ध गंधक, ३ भाग कांतलोहभस्म और इन
सबके बराबर शुद्ध विष ( वच्छनाग ) लेकर चित्रकके क्काथमें उक्त
सबोंको खरल करे ॥ ४८ ॥

धूर्त्तबीजस्य भस्मापि द्वात्रिंशद्भागसंयुतम् ॥
कटुत्रयं त्रिभागं स्याल्लवङ्गैला च तत्समम् ॥ ४९ ॥

अर्थ-पश्चात् ३२ भाग धत्तूरेके बीजोंकी भस्म, ३ भाग त्रिकटु
(सोंठ, मिरच, पीपल), ३ भाग लौंग, ३ भाग इलायची ॥ ४९ ॥

जातीफलं तथा कोषमर्द्धभागं नियोजयेत् ॥
तथार्द्धं लवणं पञ्च स्नुह्यर्कैरण्डतिन्तिडी ॥ ५० ॥

अर्थ-आधा भाग जायफल और आधा भाग जायपत्री अर्थात्

दोनों मिलकर तीन भाग तथा पांचों नोन, थूहर, आक, एरंड, इमली ॥ ५० ॥

अपामार्गाश्वत्थजं च क्षारं दद्याद्विचक्षणः ॥
हरीतकी यवक्षारं स्वर्जिका हिंगु जीरकम् ॥ ५१ ॥

अर्थ—ऊंगा ( चिरचिरा, अंधाझाडा, अपामार्ग ) और पीपल इन सबका खार, हर्ड, जवाखार, सज्जी, हींग, जीरा ॥ ५१ ॥

टंकणं च सूततुल्यमम्लयोगेन मर्दयेत् ॥
भोजनांते प्रयोक्तव्यो गुंजाफलप्रमाणतः ॥ ५२ ॥

अर्थ—और सुहागा ये प्रत्येक शुद्ध पारेके बराबर (एक एक भाग) लेके और इन सबको महीन पीस पूर्वोक्त चित्रकके क्वाथमें खरल किये हुए रसोंमें मिलाकर निंबूके रससे पुनः खरल करे जब सब घुटकर एक जीव हो जावे तब इसे चीनी या कांचके पात्रमें रक्खे इसमेंसे १ रत्ती भोजनके पश्चात् खिलावे तो ॥ ५२ ॥

रसः पाशुपतो नाम सद्यः प्रत्ययकारकः ॥
दीपनः पाचनो हृद्यः सद्यो हन्ति विषूचिकाम्॥५३॥

इति रसेन्द्रसारसंग्रहे अजीर्णाधिकारे ।

अर्थ—यह पाशुपतरस तत्क्षणही अपने गुणको दिखलाता है। यह दीपन, पाचन, हृदयको बलप्रद और विषूचिका ( महामारी, हैजेकी बीमारी ) का शीघ्रही नाश करनेवाला है। ऐसा रसेंद्रसारसंग्रहके अजीर्णाधिकारमें लिखा है ॥ ५३ ॥

अथ पर्पटीरसनिर्म्माणविधिः ।

रसं त्रिगुणगंधेन मर्दयित्वा सभृंगकम् ॥
लोहपात्रे घृताभ्यक्ते द्रावितं बदराग्निना ॥ ५४ ॥

अर्थ—अब पर्पटीरसके बनानेकी विधि वर्णन करते हैं। ४ तोले शुद्ध पारा और १२ तोले शुद्ध गंधक लेकर इन दोनोंको खरल करे

जब कज्जली हो जावे तब उसे भंगरेके रसमें घोटे फिर घीसे चुपडे हुए लोहपात्रमें भंगरेके रसमें घुटी हुई कजलीको डालकर बेरकी लकडीकी आंच देके पिघलावे ॥ ५४ ॥

ऊर्ध्वाधो गोमयं दत्त्वा कदल्याः कोमले दले ॥
स्निग्धे पत्रे ह्ययोदर्व्या पर्पटाकारतां नयेत् ॥ ५५ ॥

अर्थ-पश्चात् समभाग पृथ्वीपर गोवर बिछाकर उस गोवरपर उत्तम चिकना केलेका पत्ता रखकर उस केलेके पत्तेपर पिघली हुई कजलीको डाल देवे और उसके ऊपर दूसरा केलेका पत्ता रखकर उसपै पुनः गोवर डालकर ऐसे प्रकारसे दबावे जिससे उस पिघली हुई कज्जली पपडीके समान बन जावे ॥ ५५ ॥

पादे लोहे विनिक्षिप्ते लोहपर्पटिका भवेत् ॥
ताम्रे पादे विनिक्षिप्ते ताम्रपर्पटिका भवेत् ॥ ५६ ॥

अर्थ-इसी कज्जलीमें चौथा भाग लोहभस्म मिलानेसे लोहपर्पटी और ताम्रभस्म मिलानेसे यही ताम्रपर्पटी कहलाती है ॥ ५६ ॥

विषपादं च युंजीत त्वसाध्येष्वामयेषु च ॥
सुरसाया जयन्त्याश्च कन्यकाढकरूषयोः ॥ ५७ ॥

अर्थ-पश्चात् इस पर्पटीमें तच्चतुर्थांश शुद्ध किया हुआ सिंगिया मिलाकर तुलसी, अरनी ( अग्निमंथ ), घीकुमारी ( गुवांरपाठा ), अडूसा ॥ ५७ ॥

त्रिफलाया मुनेर्भाङ्ग्र्या मुंड्या त्रिकटुसंज्ञयोः ॥
भृंगराजस्य वह्नेश्च प्रत्यहं द्रवभावितम् ॥ ५८ ॥

अर्थ-त्रिफला, अगस्ति, भाङ्गीं, गोरखमुंडी, त्रिकुटा, भांगरा और चित्रक इन प्रत्येकके रसकी तथा क्वाथकी एक एक भावना देवे ५८॥

आर्द्रकस्य द्रवेणाथ सप्तधा भावयेत्पुनः ॥
अंगारे स्वेदयेदीषत्पर्पटीरसमुत्तमम् ॥ ५९ ॥

अर्थ–फिर अदरखके रसकी ७ भावना देकर अंगारपर कुछ स्वेदन करके रक्खे यह असाध्य रोगोंपरभी उत्तम पर्पटीरस है॥५९॥

गुंजाष्टकं दद्दीतास्य ताम्बूलीपत्रसंयुतम् ॥
पिप्पलीरसकैश्चापि निर्गुंडचा ह्यनुपाययेत् ॥ ६० ॥

अर्थ–इस रसकी १ मासे भरकी मात्रा पानमें अथवा १० पीपलीके चूर्णसंग देवे और ऊपरसे निर्गुंडीके रसको ॥ ६० ॥

त्रिकंटकस्य मूलानि शुंठीं छित्त्वा विनिःक्षिपेत् ॥
अजाक्षीरे सनीरार्द्धे यावत्क्षीरं विपाचयेत् ॥ ६१ ॥

अर्थ–अथवा गोखरूकी जड और सोंठको बकरीके दूधमें डालकर उसमें आधा पानी मिलाकर औटावे जब दूध मात्र शेष रह जावे तब छानकर ॥ ६१ ॥

तत् क्षीरं पाययेद्रात्रौ सकणं भोजयेदपि ॥
कूष्मांडं वर्जयेच्चिंचां वृंताकं कर्कटीमपि ॥ ६२ ॥

अर्थ–पीपलीयुक्त इस दूधको रात्रिके समय पिलावे और उत्तम प्रकारका भोजन करावे तो वह पुरुष रोगरहित दिव्य देह होय। इस रसको सेवन करनेवालेने कूष्मांड ( कोहला, ) इमली, बैंगन, ककडी ॥ ६२ ॥

आरनालं च तैलं च मैथुनं च विवर्जयेत् ॥
मासत्रयं तु सेवेत कासश्वासापनुत्तये ॥ ६३ ॥

अर्थ–कांजी, तैल और मैथुन ( स्त्रीसंग, व्यवाय ) इनको त्याग (छोड) ही देवे। इस पर्पटीरसका यदि ३ मास पर्यंत सेवन करे तो समस्त कास और श्वासभी दूर होंय। ऐसा ग्रंथांतरमें लिखा है॥६३॥

अथ जयावटीनिर्माणविधिः ।

विषं त्रिकटुकं मुस्तं हरिद्रा निम्बपत्रकम् ॥

विडंगमष्टमं चूर्णं छागमूत्रैः समं समम् ॥
चणकाभा वटी कार्या स्याज्जया योगवाहिका ॥६४॥

इति रसेंद्रसारसंग्रहे ज्वराधिकारे।

अर्थ-शुद्ध विष ( सिंगिया ), त्रिकटु ( सोंठ, मिरच, पीपल ), नागरमोथा, हलदी, नींबके पत्ते और वायविडंग ये आठों समान लेकर इनका महीन चूर्ण बनावे फिर उनको बकरीके मूत्रमें खरल करके चनेके बराबर वटी ( गोली ) बनावे इसे जयावटी कहते हैं। यह पृथक् पृथक् अनुपानोंसे अनेक रोगोंको दूर करती है। ऐसा रसेंद्रसारसंग्रहके ज्वराधिकारमें लिखा है ॥ ६४ ॥

## अथ जयंतीवटीनिर्माणविधिः।

विषं पाठाश्वगंधा च वचा तालीशपत्रकम् ॥
मरीचं पिप्पली निम्बमजामूत्रेण तुल्यकम् ॥
वटिका पूर्ववत् कार्य्या जयन्ती योगवाहिका ॥ ६५ ॥

इति रसेंद्रसारसंग्रहे ज्वराधिकारे।

अर्थ-अब जयंतीवटीके बनानेकी विधि वर्णन करते हैं। शुद्ध विष, पाठा, असगंध, वच, तालीशपत्र, काली मिरच, छोटी पीपल और नींब इन आठों औषधोंको समान लेकर इनका कपडछान चूर्ण बनावे और उस चूर्णको बकरीके मूत्रमें खरल करके चनेके समान वटियां बनावे इसे जयंतीवटी कहते हैं। यहभी पृथक् २ अनुपानोंसे अनेक रोगोंको दूर करती है उक्त दोनों वटीमें समानही औषध और इन दोनोंके समानही अनुपान होनेसे उक्त दोनों वटी योगवाही ( साथही रहनेवाली ) है इसीलिये इनका जयाजयन्ती वटी ऐसा एक साथभी कह सक्ते हैं। ऐसा रसेंद्रसारसंग्रहमें ज्वराधिकारमें लिखा है ॥ ६५ ॥

विशेषतः हमने जो इस छहवे तरंगमें गुग्गुलुचूर्ण, रस और वटी

वर्णन की हैं उनके पृथक् २ अनुपान पूर्व ४ थे तथा ५ वे तरंगमें दे चुके हैं । जिसे पाठक महाशय स्वयं विचार लेंगे ।

इति श्रीमत्पण्डितझारसरामविरचिते सुभाषानुवादविभूषितेऽनुपानदर्पणे योगराजगुग्गुलु-नारायणचूर्ण-मृत्यंजयादिरसनिर्माण-विवेककथने षष्ठः प्रमोदः ॥ ६ ॥

---

# अथ सप्तमः प्रमोदः ।

अथाऽतो धातूपधातुरसोपरसरत्नोपरत्नविषोपविषाणां शोधनमारणविवेकं व्याख्यास्यामः, तत्रादौ धातवः ।

स्वर्णं रूप्यं च ताम्रं च रङ्गं यशदमेव च ॥
सीसं लोहं च सप्तैते धातवो गिरिसंभवाः ॥ १ ॥

अर्थ–अब इसके आगे धातु उपधातु, रस उपरस, रत्न उपरत्न, विष और उपविषोंके शोधन और मारण ( भस्म करने ) का विवेक ( विचार ) वर्णन करेंगे । १ सोना, २ चांदी, ३ तांबा, ४ रांगा ( कथिल ), ५ जस्ता, ६ सीसा और ७ लोहा ये पहाडोंसे उत्पन्न होनेवाले सात धातु हैं ॥ १ ॥

उपधातवः ।

सप्तोपधातवः स्वर्णमाक्षिकं तारमाक्षिकम् ॥
तुत्थं कांस्यं च रीतिश्च सिन्दूरश्च शिलाजतुः ॥२॥

अर्थ–१ सोनामक्खी, २ रूपामक्खी, ३ नीलाथोथा, ४ कांसा[1], ५ पीतल[2], ६ सिंदूर और ७ शिलाजीत ये सात उपधातु[3] हैं ॥ २ ॥

---

१ कांसा यह तांबे और रांगेके योगसे बनता है ।

२ पीतल यह तांबे और जस्तके मेलसे बनता है ।

३ सात उपधातुमें किसीके मतमें सुरमेका ग्रहण और रूपामक्खीका त्याग है ।

रसः ।

रसायनार्थिभिर्लोकैः पारदो रस्यते यतः ॥
ततो रस इति प्रोक्तः स च धातुरपि स्मृतः ॥ ३ ॥

अर्थ-जरा-रोगरहित और बल बुद्धि वृद्धिसहित रहनेकी इच्छावाले मनुष्योंकरके पारा भक्षण किया जाता है इस कारण अथवा सुवर्णादि सर्व धातुओंको भक्षण कर जानेवाला है इसलिये पारेको रस तथा धातुभी कहते हैं ॥ ३ ॥

उपरसाः ।

गन्धो हिङ्गुलमभ्रतालकशिलाः स्रोतोऽञ्जनं टङ्कणं
राजावर्तकचुम्बकौ स्फटिकया शङ्खः खटी गैरिकम् ॥
कासीसं रसकङ्कपर्दसिकता बोलश्च कंकुष्ठकं
सौराष्ट्री च मता अमी उपरसाः सूतस्य किंचिद्गुणैः ४

अर्थ-गंधक, हिंगुल, अभ्रक, हरताल, मनशिल, काला सुरमा, सुहागा, राजावर्तक (रेवटी), चुंबकपाषाण, फिटकरी, शंख, खडिया, गैरों, हीराकसी, खपरिया, कौडी, वालू ( सिकता ), बोल, मुरदारशंख और मुलतानी ये उपरस हैं। ये पारेके किंचित् गुणयुक्त माने गये हैं ॥ ४ ॥

रत्नानि ।

वज्रं गारुत्मकं पुष्परागो माणिक्यमेव च ॥
इन्द्रनीलश्च गोमेदस्तथा वैदूर्य्यमित्यपि ॥
मौक्तिकं विद्रुमश्चेति रत्नान्युक्तानि वै नव ॥ ५ ॥

अर्थ-हीरा, पन्ना, माणिक, पुखराज, नीलमणी ( नीलम ), गोमेद ( पीला रत्न ), वैदूर्य ( श्याम मणि ), मोती और मूंगा ये नव रत्न कहाते हैं ॥ ५ ॥

## उपरत्नानि ।

उपरत्नानि काचश्च कर्पूराश्मा तथैव च ॥
मुक्ताशुक्तिस्तथा शङ्ख इत्यादीनि बहून्यपि ॥ ६ ॥

अर्थ—काच, बिल्लौर, मोतीकी सीप और शंख इत्यादि उपरत्न कहाते हैं ॥ ६ ॥

## विषाः ।

विषं तु गरलः क्ष्वेडस्तस्य भेदानुदाहरे ॥
वत्सनाभः सहारिद्रः सक्तुकश्च प्रदीपनः ॥ ७ ॥

अर्थ—विष, गरल और क्ष्वेड ये विषहीके नाम हैं । पर १ वत्स[1]-नाभ, २ हारिद्रक, ३ सक्तुक, ४ प्रदीपन ॥ ७ ॥

सौराष्ट्रिकः शृङ्गकश्च कालकूटस्तथैव च ॥
हालाहलो ब्रह्मपुत्रो विषभेदा अमी नव ॥ ८ ॥

अर्थ—५ सौराष्ट्रिक, ६ शृंगक, ७ कालकूट, ८ हालाहल और ९ ब्रह्मपुत्र ये विषके नव भेद हैं ॥ ८ ॥

## उपविषाः ।

अर्कक्षीरं स्नुहीक्षीरं तथैव करिहारिका ॥
कर्वीरकोथ धत्तूरः पञ्च चोपविषाः स्मृताः ॥ ९ ॥

भा० प्र० खं० १ भा० १ ।

अर्थ—आकका दूध, थूहरका दूध, कलियारी, कण्हेर और धतूरा ये पांच उपविष हैं । ऐसा भावप्रकाशके पूर्वखण्डके पहले भागमें लिखा है ॥ ९ ॥

---

१ वत्सनाभ आदि नव विषोंकी परीक्षा करना चाहो तो इनके लक्षणको भावप्रकाशादि महद्ग्रन्थोंसे जानो जबतक उनके लक्षणोंको न जानोंगे तबतक उनका पहिचाननाभी कठिन है ।

विशेषतः कई ग्रन्थोंमें उक्त पांच तथा १ गुञ्जा (चिरमी, घूंघची), २ कुचला, ३ जमालगोटा और ४ अफीम इनसहित नवही उपविषभी माने हैं।

सप्तधातुशोधनम् ।

स्वर्णताराररताम्राणां पत्राण्यग्नौ प्रतापयेत् ॥
निषिञ्चेत्तप्ततप्तानि तैले तक्रे च कांजिके ॥ १० ॥
गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा ॥
एवं स्वर्णादिलोहानां विशुद्धिः संप्रजायते ॥ ११ ॥
शार्ङ्ग० खं० २ अ० ११ ।

अर्थ-अब सप्तधातुशोधन कहते हैं। सुवर्णादि धातुओंके पात्रोंको अग्रिमें तपा तपाकर तेल, छाछ, कांजी, गोमूत्र और कुलथीका काढा इन प्रत्येकमें क्रमशः तीन तीन वार बुझाओ तो समस्त धातु शुद्ध हो। यह शुद्धि शार्ङ्गधरके २ रे खण्डके ११ वे अध्यायमें लिखी है ॥ १० ॥ ११ ॥

विशेषतः सात धातुओंमेंसे १ रांगा, २ सीसा और ३ जस्ता इन तीनोंको गला गलाके तेल आदि उक्त पांचों पदार्थोंमें बुझाना चाहिये।

उपधातुशोधनं तत्र सुवर्णमाक्षिकशोधनम् ।

मातुलुङ्गद्रवैर्वाथ जम्बीरस्य द्रवैः पचेत् ॥
चालयेल्लोहजे पात्रे यावत् पात्रं सुलोहितम् ॥१२॥
भवेत्ततस्तु संशुद्धिं स्वर्णमाक्षिकमृच्छति ॥ १३ ॥

अर्थ-अब सोनामक्खीका शोधन कहते हैं। बिजोरे निंबूके रसमें अथवा जम्बीरीके रसमें सोनामक्खीको डालकर लोहेकी कडाहीमें पकाओ जब रस जलकर कडाही लाल हो जावे तब उतारके शीतल हो जानेपर निकालो सोनामक्खी शुद्ध हो जावेगी ॥१२॥१३॥

## रौप्यमाक्षिकशोधनम् ।

ककौंटीमेषशृंग्युत्थैर्द्रवैर्जंबीरजैर्दिनम् ॥
भावयेदातपे तीव्रे विमला शुद्ध्यति ध्रुवम् ॥ १४ ॥

अर्थ-रूपामक्खीको ककोडा, मेढासिंगी और जम्बीरी इन प्रत्येकके रसमें एक दो दिन घोट घोटकर सूर्यकी तीक्ष्ण तापमें रक्खो तौ रूपामक्खी शुद्ध होगी ॥ १४ ॥

## तुत्थशोधनम् ।

विष्टया मर्दयेत्तुत्थं मार्ज्जारककपोतयोः ॥
दशांशं टंकणं दत्त्वा पचेन्मृदुपुटे ततः ॥
पुटं दध्ना पुटं क्षौद्रैर्देयं तुत्थविशुद्धये ॥ १५ ॥

अर्थ-बिल्ली और कबूतरकी वीट ( विष्ठा ) में नीले थोथेको खरल करे पश्चात् उसमें उसीका दशांश सुहागा मिलाकर शरावसंपुट करे अनन्तर जङ्गली गोवरीकी हलकी आंच देवे पश्चात् निकालके दहीका पुट देकर पुनः आंच दे इसी प्रकार पुनः सहतका पुट देकर आंच देवे तौ नीलाथोथा शुद्ध हो ॥ १५ ॥

## कांस्यरीतिशोधनम् ।

शोधनं कांस्यरीत्योश्च धातुशुद्धिसमं भवेत् ॥ १६॥

अर्थ-कांसे और पीतलका शोधन पूर्वोक्त धातुशोधनके समानही जानो ॥ १६ ॥

## सिंदूरशोधनम् ।

दुग्धाम्लयोगतस्तस्य विशुद्धिर्गदिता बुधैः ॥ १७ ॥

अर्थ-सिंदूर दूध और नींबू आदि खट्टे रसकी भावना देनेसे शुद्ध होता है ॥ १७ ॥

## शिलाजतुशोधनम्।

शिलाजतु समानीय ग्रीष्मतप्तशिलाच्युतम् ॥
गोदुग्धैस्त्रिफलाक्काथैर्भृङ्गद्रावैश्च मर्दयेत् ॥
आतपे दिनमेकैकं तच्छुष्कं शुद्धतां व्रजेत् ॥ १८ ॥

अर्थ-ग्रीष्मऋतुमें अत्यन्त उष्णताके कारण पर्वत तप्त होकर उनमेंसे शिलाजीत निकलता है इस शिलाजीतको गोदुग्ध, त्रिफला और भंगरेके रसकी एक २ दिन भावना देकर सुखा लेओ तौ शिलाजीत शुद्ध हो जावेगा ॥ १८ ॥

## रससंस्काराः।

अष्टादशैव संस्कारा ऊनविंशतिकाः क्वचित् ॥
संप्रोक्ता रसराजस्य वसुसंख्याः क्वचिन्मताः ॥ १९ ॥

अर्थ-पारेके कहीं अठारह कहीं उन्नीस और कहीं आठ संस्कार माने हैं ॥ १९ ॥

## तत्राष्टादशसंस्काराः।

स्यात्स्वेदनं तदनु मर्दनमूर्च्छनं च स्यादुत्थातिः
पतनबोधनियामनानि ॥ संदीपनं गगनभक्षणमा-
नमत्र सञ्चारणं तदनु गर्भगतिर्द्रुतिश्च ॥ २० ॥
बाह्यद्रुतिः सूतकजारणा स्याद्ग्रासस्तथा सारण-
कर्म पश्चात् ॥ संक्रामणं वेधविधिः शरीरयोगस्त-
थाष्टादशधा तु कर्म ॥ २१ ॥

अर्थ-पारेके १८-१९-८ संस्कारोंका क्रम जैसे १ स्वेदन, २ मर्दन, ३ मूर्च्छन, ४ उत्थापन, ५ पातन, ६ बोधन, ७ नियमन, ८ सन्दीपन, ९ गगनभक्षण, १० सञ्चारण, ११ गर्भगति, १२ गर्भद्रुति, १३ बाह्यद्रुति, १४ सूतकजारण, १५ ग्रास, १६ सारणकर्म,

१७ संक्रामणवेधविधि और १८ शरीरयोग ये पारेके अठारह संस्कार हैं ॥ २० ॥ २१ ॥

अथैकोनविंशतिसंस्कारास्तदन्तर्गताश्चाष्टौ ।

स्वेदनमर्दनमूर्च्छनउत्थापनपातनबोधननियमनसंदीपनअनुवासनगगनादिग्रासप्रमाणचारणगर्भद्रुतिर्बाह्यद्रुतियोगजारणरंजनसारणक्रामणवेधनभक्षणाख्या ऊनविंशतिसंस्काराः सूतसिद्धिदा भवन्ति दीपनान्ता अष्टौ संस्कारा वा देहसिद्धिदा भवंति ॥ २२ ॥ ग्रंथान्तरे ।

अर्थ–पहिले कहे हुए संस्कारोंमें एक भक्षणाख्य संस्कार योजित करनेसे उन्नीस और १ ले स्वेदनसे ८ वें संदीपन पर्यन्तके आठभी संस्कार माने हैं । ये आठ संस्कार अथवा समस्त संस्कार होनेसे पारा शुद्ध होता है । ऐसा ग्रंथान्तरमें लिखा है ॥ २२ ॥

रसशोधनम् ।

अथवा हिङ्गुलात्सूतं ग्राहयेत्तान्निगद्यते ॥
जंबीरनिंबुनीरेण मर्दितो हिंगुलो दिनम् ॥ २३ ॥
ऊर्ध्वपातनयंत्रेण ग्राह्यः स्यान्निर्मलो रसः ॥
कंचुकैर्नागवंगाद्यैर्निर्मुक्तो रसकर्मणि ॥
विना कर्माष्टकेनैव सूतोऽयं सर्वकर्मकृत् ॥ २४ ॥
ग्रंथान्तरे ।

अर्थ–पहिला रसशोधन प्रकार–यद्यपि पूर्वोक्त संस्कारोंसे पारा शुद्ध होता है तथापि उन संस्कारोंको ग्रंथविस्तारभयसे हम यहां न लिखकर साधारण प्रकारसेही पारेका शोधन दर्शाते हैं कि जिससे थोडे

परिश्रमके साथ उस अष्ट वा अष्टादश संस्कारशुद्ध पारेके समानही शुद्ध और गुणप्रद पारा हो जावे। हिंगूल ( सिंगरफ ) को जंबीरी अथवा नींबूके रससे एक दिनभर खरल करे पश्चात् डमरूयंत्रद्वारा[1] उडाकर उससे निकले हुए पारेको ग्रहण करे यह पारा विना आठ संस्कारकेही सातों कंचुकी और नाग वंग आदि दोषरहित तथा निर्मल हो जाता है इसे समस्त कार्योंमें ग्रहण करना योग्य है। ऐसा ग्रंथांतरमें लिखा है॥ २३ ॥ २४ ॥

अन्यच्च–निम्बूरसैर्निम्बपत्ररसैर्वा याममात्रकम् ॥
पिष्ट्वा दरदमूर्ध्वं च पातयेत्सूतयुक्तिवत् ॥
ततः शुद्धरसं तस्मान्नीत्वा कार्येषु योजयेत् ॥ २५ ॥

शा० खं० २ अ० ११ ।

अर्थ–दूसरा प्रकार–शार्ङ्गधरमें ऐसाभी लिखा है कि शिंगरफको नींबूके अथवा नींबके पत्तोंके रससे १ प्रहर पर्यंत खरल करके डमरू-यंत्रसे २ तथा ३ प्रहरकी आंच देके उडा लेवे और उस शिंगरफसे उडकर निकले हुए शुद्ध पारेको लेकर सर्व कार्योंमें योजित करे॥२५॥

अन्यच्च–कुमारिकाचित्रकरक्तसर्षपैः कृतैः कषा-
यैर्बृहतीविमिश्रितैः ॥ फलत्रिकेणापि विमर्दितो
रसो दिनत्रयं सर्वमलैर्विमुच्यते ॥ २६ ॥

भा० प्र० खं० १ भा० २ ।

अर्थ–तीसरा प्रकार–कुमारिका ( गवांरपाठा ),चित्रक,लाल सरसों

---

१ दो मिट्टीके घडोंका मुख परस्पर जोडके कपडमिट्टीसे बंद कर दे नीचेके घडेमें जो वस्तु धरना हो सो धरके आंच लगावे और ऊपरके घडेके पेंदेपर मिट्टीकी किनारी बनाके उसपर गीला कपडा धर दे और उस कपडेको सूकने न दे किन्तु उसपर वारंवार पानी छोडता जावे इसे डमरूयंत्र कहते हैं इस यंत्रद्वारा नीचेके घडे-में रखी हुई वस्तुमेंसे पारा आदि ऊपरके घडेमें उडकर आ जाता है उसेही ले लेना चाहिये ।

और भटकटैया इनके क्वाथसे और त्रिफलासे तीन दिन पर्यंत पारेको खरल करनेसे समस्त मलरहित शुद्ध पारा हो जाता है । ऐसा भावप्रकाशके पूर्वखण्डके दूसरे भागमें लिखा है ॥ २६ ॥

उपरसशोधनं तत्र गंधकशोधनम् ।

लोहपात्रे विनिःक्षिप्य घृतमग्नौ प्रतापयेत् ॥
तप्ते घृते तत्समानं क्षिपेद्गन्धकजं रजः ॥ २७ ॥

अर्थ–अब उपरसोंका शोधन दर्शाते हैं । लोहेके पात्रमें घी डालके उसे अग्निसे तपावे जब घी अच्छा तप जावे तब उस घीमें उसके समान पीसा हुआ आंवलसार गंधक डाले ॥ २७ ॥

विद्रुतं गन्धकं दृष्ट्वा तनुवस्त्रे विनिःक्षिपेत् ॥
यथा वस्त्राद्विनिःसृत्य दुग्धमध्येऽखिलं पतेत् ॥
एवं स गन्धकः शुद्धः सर्वकर्मोचितो भवेत् ॥ २८ ॥

अर्थ–जब वह गंधक घीमें पिघल जावे तब एक पात्रमें दूध भरके उस पात्रके मुँहपर महीन कपडा बांध कर उसमें वह पिघला हुआ गंधक डाल दे जिससे गंधक छानकर दूधमें गिरे और जो कुछ कंकर, मट्टी हो सो सब वस्त्रमें रह जावे फिर वह गंधक दूधमें गिर कर शीतल हो जावे तब उसे लेवे इस प्रकार गंधक शुद्ध होता है ॥२८॥

हिंगुलशोधनम् ।

मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम् ॥
सप्तवारान् प्रलेपेन शुद्धिमायाति निश्चितम् ॥ २९ ॥

अर्थ–हिंगुल ( शिंगरफ ) को खलमें डालकर सात पुट भेडीके दूध और ७ पुट नींबूके रसकी देवे तो निश्चय शुद्ध होवे ॥ २९ ॥

अभ्रकशोधनम् ।

कृष्णाभ्रकं धमेद्वह्नौ ततः क्षीरे विनिःक्षिपेत् ॥

भिन्नपत्रं तु तत्कृत्वा तण्डुलीयाम्लयोर्द्रवैः ॥
भावयेदष्टयामं तदेवमभ्रं विशुद्धयति ॥ ३० ॥

अर्थ-काले अभ्रकको अग्निमें तपाकर गौके दूधमें बुझाओ फिर चौलाईके रसमें अथवा चावलोंके पानीमें और इमलीकी खटाईमें आठ प्रहर ( एक दिनरात ) भिगाये रक्खो तौ अभ्रक शुद्ध होवे ॥ ३० ॥

हरितालशोधनम् ।

तालकं कणशः कृत्वा तच्चूर्णं काञ्जिके पचेत् ॥
दोलायंत्रेण यामैकं ततः कूष्माण्डजद्रवैः ॥ ३१ ॥
तिलतैले पचेद्यामं यामं च त्रिफलाजले ॥
एवं यन्त्रे चतुर्यामं पक्वं शुद्धयति तालकम् ॥ ३२ ॥

अर्थ-हरतालके छोटे २ टुकडे करके १ प्रहर कांजीमें, १ प्रहर भुरे कुह्मडेके रसमें, १ प्रहर तेलमें, १ प्रहर त्रिफलाके क्वाथमें दोलायं-त्रसे आंच दे तौ हरताल शुद्ध होवे ॥ ३१ ॥ ३२ ॥

मनःशिलाशोधनम् ।

पचेत्त्र्यहमजामूत्रे दोलायन्त्रे मनश्शिलाम् ॥
भावयेत्सप्तधा पित्तैरजायाः सापि शुद्धयति ॥ ३३ ॥
भा० प्र० ।

अर्थ-मनशिलको बकरीके मूत्रसे दोलायंत्रमें ३ दिन औटावे पश्चात् खलमें डालकर बकरीके पित्तेकी ७ भावना देवे तो मनशिल शुद्ध होय । ये सब शोधन भावप्रकाशमें लिखे हैं ॥ ३३ ॥

---

१ दोलायंत्र उसे कहते हैं कि जिस पात्रमें कांजी आदि हो उस पात्रको मुखसे कुछ कम भरके उसमें जिस औषधको शुद्ध करना हो उसे भोजपत्रमें लपटे तिहेर कपडेमें पोटलीरूपसे बांध उस एक लकडीमें डोरसे बांधकर बीचोबीच अधर लटका देवे पश्चात् उस पात्रको भट्टी या चूल्हेपर चढाके लिखे प्रमाण आंच दे ।

अन्यच्च–अगस्तिपत्रतोयेन भावितं सप्तवारकम् ॥
शृंगवेररसैर्वापि विशुद्ध्यति मनश्शिला ॥ ३४ ॥
ग्रंथान्तरे ।

अर्थ–मनशिलको अगस्तिपत्र रसकी अथवा अदरखके रसकी ७ भावना दे तो मनशिल शुद्ध हो । ऐसा ग्रंथांतरमें लिखा है ॥ ३४ ॥

खर्परशोधनम् ।

नरमूत्रे च गोमूत्रे सप्ताहं रसकं पचेत् ॥
दोलायन्त्रेण शुद्धः स्यात्ततः कार्येषु योजयेत् ॥३५॥

अर्थ–खपरियाको मनुष्यके मूत्र अथवा गोमूत्रमें दोलायंत्रसे सात दिन पकाओ तो शुद्ध हो ॥ ३५ ॥

कंकुष्ठादीनां शोधनम् ।

कंकुष्ठं गैरिकं शंखः कासीसं टङ्कणं तथा ॥
नीलाञ्जनं शुक्तिभेदाः क्षुल्लकाः सवराटकाः ॥ ३६ ॥
जंबीरवारिणा स्विन्नाः क्षालिताः कोष्णवारिणा ॥
शुद्धिमायान्त्यमी योज्या भिषग्भिर्योगसिद्धये ॥३७॥
भा० प्र० ।

अर्थ–१ मुरदारशंख, २ गेरू, ३ शंख, ४ हीराकसी, ५ सुहागा, ६ काला सुरमा और ७ सींपभेदरूप जो घोंघा कौडी इत्यादि इनको जंबीरीके रसमें शोधन करके गरम पानीसे धो डालो तो ये सब उपरस शुद्ध हो जावेंगे । ऐसा भावप्रकाशमें लिखा है ॥ ३६ ॥ ३७ ॥

सर्वोपरसानां शोधनम् ।

त्रिक्षारे लवणे देयमम्लवर्गे त्रिधा पचेत् ॥

---

१ अम्लवेतसवृक्षाम्लबृहज्जम्बीरनिम्बुकैः । चतुरम्लं हि पञ्चाम्लं बीजपूरयुतैर्भवेत् ॥ १ ॥ इति भावप्रकाशे ।

तदा चोपरसाः शुद्धा जायन्ते दोषवर्जिताः ॥ ३८ ॥

ग्रंथान्तरे ।

अर्थ-सब उपरसोंको जवाखार, सज्जीखार, सुहागा, नोन और अम्लवर्ग इन प्रत्येकमें तीन तीन वार पचावे तो समस्त उपरस दोषरहित शुद्ध होवें । ऐसा ग्रंथांतरमें लिखा है ॥ ३८ ॥

रत्नशोधनं तत्रादौ वज्रस्य शोधनम् ।

कुलत्थकोद्रवक्काथे दोलायन्त्रे विपाचयेत् ॥
व्याघ्रीकन्दगतं वज्रं त्रिदिनं तद्विशुद्ध्यति ॥ ३९ ॥

अर्थ-हीरेको छोटी कटियालीके मूलमें रखकर कुलथी और कोदोंके काढेसे दोलायंत्रमें ३ दिन पर्यन्त पकावे तो हीरा शुद्ध हो॥३९॥

अवशिष्टरत्नानां शोधनम् ।

वज्रवत्सर्वरत्नानि शोधयेन्मारयेत्तथा ॥ ४० ॥

भा० प्र० ।

अर्थ-शेषरत्नोंका शोधन और मारण हीरेके समानही जानो। ऐसा भावप्रकाशमें लिखा है ॥ ४० ॥

विषशोधनम् ।

कृत्वा चणकसंख्यानं गोमूत्रैर्भावयेत्त्र्यहम् ॥
समटङ्कणसंपिष्टं मृतमित्युच्यते विषम् ॥ ४१ ॥

इति रसेन्द्रसारसंग्रहे ।

अर्थ-जिस विषका शोधन करना हो उसके छोटे छोटे चनेके समान टुकडे करके पश्चात् गोमूत्रसे दोलायंत्रमें ३ दिन पर्यन्त आंच देवे और फिर उसके समान सुहागा मिलाकर खरलकर लेवे तो वह विष निर्विष ( शुद्ध ) हो जाता है । ऐसा रसेन्द्रसारसंग्रहमें लिखा है ॥ ४१ ॥

## उपविषशोधनम् ।

पञ्चगव्येषु शुद्धानि देयान्युपविषाणि च ॥
विषाभावप्रयोगेषु गुणस्तु विषसंभवः ॥ ४२ ॥

अर्थ–समस्त उपविषोंको दूध, दही, घृत, गोमूत्र और गोबरमें शोधन करके जहां विष न मिले वहां शुद्ध उपविषोंको योजित करना चाहिये ॥ ४२ ॥

## जैपालशोधनम् ।

न विषं विषमित्याहुर्जैपालो विषमुच्यते ॥
शोधितश्च विरेकेषु चमत्कृतिकरः परः ॥४३ ॥

अर्थ–पंडित ( सत् असत् विचार करनेवाले ) वैद्य जैसा विषको विष नहीं समझते वैसा जमालगोटेको विष ( जहर ) मानते हैं और यही जमालगोटा शुद्ध होनेपर विरेचन ( दस्त, जुलाब ) में चमत्कारप्रदर्शक अतिश्रेष्ठ हो जाता है ॥ ४३ ॥

जैपालं रहितं त्वगंकुररसैर्जाभिर्मले माहिषे निः-
क्षिप्तं त्र्यहमुष्णतोयविमलं खल्वे सवासोर्दितम् ॥
लिप्तं नूतनखर्परेषु विगतस्नेहो रजःसंनिभो
निम्बूकांबुविभावितश्च बहुशः शुद्धो गुणाच्छो
भवेत् ॥ ४४ ॥ ग्रंथान्तरे ।

अर्थ–जमालगोटेके छिलकोंको दूर करके उसके भीतर एक महीन पत्ती ( जो जमालगोटेकी जीभ ) होती है उसे निकाल डाले पश्चात् एक वस्त्रमें बांधके ३ दिनतक भैंसके गोबरमें दबाय रक्खे फिर निकालकर गरम पानीसे धो डाले फिर दूसरे अच्छे वस्त्रमें बांधके युक्तिसे खरल करे कि जिससे उसका तेल २ वस्त्र शोष ले पश्चात् नवीन खपरेपर उसका लेप देवे जब तेलमात्र उसमें न रह-

कर धूलीके समान वह हो जावे तब उसे नींबूके रसकी भावना देवे तो जमालगोटा शुद्ध हो। यह सब ग्रंथांतरमें लिखा है ॥ ४४ ॥

### अथ स्वर्णादीनां मारणं सुवर्णमारणम्।

**स्वर्णस्य द्विगुणं सूतमम्लेन सह मर्दयेत् ॥**
**तद्गोलकसमं गंधं निदध्यादधरोत्तरम् ॥ ४५ ॥**
**गोलकं च ततो रुध्वा शरावं दृढसंपुटे ॥**
**त्रिंशद्वनोपलैर्दद्यात्पुटान्येवं चतुर्दश ॥ ४६ ॥**
**निरुत्थं जायते भस्म गन्धो देयः पुनः पुनः ॥ ४७ ॥**

अर्थ-अब सोने आदिके मारण ( भस्म करने ) की विधि दर्शाते हैं। शुद्ध किये हुए सोनेसे दूना शुद्ध पारा लेकर दोनों नींबूके रससे खरल करके गोला बनावे और उस गोलेके समान शुद्ध गंधकके चुरेको सरावसंपुट[1]में नीचे, ऊपर और गोलेको बीचमें रक्खे पश्चात् कपडमिट्टीसे शरावसंपुटको दृढकरके ३० जंगली गोवरी ( कंडों ) की आंच देवे इस प्रकार चौदह पुट ( १४ वार आंच ) देनेसे सोनेकी निरुत्थ[2] ( पक्क ) भस्म होय। पर प्रत्येक आंचके साथ गंधक संपुटमें नीचे ऊपर अवश्य रक्खे ॥ ४५ ॥ ४६ ॥ ४७ ॥

### रौप्यमारणम्।

**भागैकं तालकं मर्द्य याममम्लेन केनचित् ॥**
**तेन भागत्रयं तारपत्राणि परिलेपयेत् ॥ ४८ ॥**

---

१ मिट्टीके पके हुए दो सिकोरे ( सराईदीये ) को लेकर उनको युक्तिसे पत्थरपर घिसकर दोनोंको ऐसे जोडे कि जिनकी कोर बराबर मिल जावे और कुछ संधि न रहे उनमें जो भस्म करनेकी वस्तु होय उसे रखकर दोनों सराईको जोड कपडमिट्टीसे दृढ कर दे कि जिससे भीतर रक्खी हुई वस्तु बाहर न निकलने पावे इसे सरावसंपुट कहते हैं।

२ जिसे सहत, घी और सुहागा इन युक्तकरके आंच देनेसेभी जो जीवित न हो उसे निरुत्थभस्म जानो।

